शिष्टाः शिष्या गणभृतः। अर्हत्त्वं यथावस्थितं [1]ते जानन्ति नान्ये, यतश्चतुरनुयोगिनस्ते। तीर्थकृत्प्रज्ञोत्पादविगमध्रौव्यलक्षणास्तद्द्रव्य(द्रव्य)व्यच्छेदकाः[2] स्युः। अर्हत्त्वमपि गणभृत्त्वमपि आत्मरूपम्। ततस्तद्द्वयं ते द्वयेऽपि जानन्ति। यतः षोडशांशास्तीर्थकृतः, त्रयोदशांशाः गणभृतः। द्वयोरियदन्तरं षोडश–त्रयोदशांशाः स्कन्धरूपपुद्गलाः। [3]तीर्थकरनामकर्मसम्बद्धोदयेनार्हत्त्वं गणभृत्त्वं च! सर्वज्ञता तुल्या सिद्धिश्च। परं निश्चयतोऽर्हत्त्वे गणभृत्त्वे व्यवहारः। सोऽत्यन्तं बलवानर्हतामपि। गणधरकृतमर्हन्तोऽपि न बाधन्ते। [4]आइरीति संघरूपं मोक्षरूपमर्हत्त्वमुक्तम्। संघाद्यो गणभृत्। तस्मादाचार्यमन्त्रः। अतोऽर्हत्त्वसिद्धिर्व्याख्यायते पूर्वम्, पश्चादाचार्यरम्परा।

अस्य चतस्रो वाचनाः—महती, बृहती, उक्ता, न्यासी। गणभृतामाद्यतीर्थे स्वयंसिद्धो मन्त्रः, तेन महती बहुसिद्धिः। अनन्तरं या पश्चाज्जायते पूर्णा सा बृहती। [5]गौतमी तु उक्ता चतुर्दशपूर्विणां यावत् सातिशयः कालः। न्यासी नानादेशीलब्धिपदानि त्रीणि चत्वारि पञ्च पदानि एकस्मिन् पदे न्यस्यन्ते सा न्यासी। [7]यथा पदानुसारिणीं विना न पूर्वाणि, चउदसपुव्वीणं, अनया रीत्या पञ्चाशत्। यथा यथातिशयहानिस्तथा तथा पदहानिः। अत्र स्तवो ज्ञापकः—

आयरियमेरुपयमपि साहंते सूरिणो वंदे। [मानदेवस्तव[6] गा० ९]

तत् कथं लब्धिमन्तः साधवो ध्यायन्ते पूर्वं [8]तद्ध्याने च सारस्वतादिसिद्धिः? न। अर्हत्त्वं गणभृत्त्वं च यथाख्यातचारित्रेण, क्षायिकज्ञानदर्शनेन[9]लब्धीरनुभूय पूर्वभवे पश्चादर्हत्त्वं गणभृत्त्वं वा स्यात्, अतोऽपि साधवो ध्येयाः। सिद्धत्वं तेषामेव अर्हत्त्व–गणभृत्त्व-[10]साधुत्वादीनाम्, द्वितीयं च। अत्र स्तवो ज्ञापकः—

---

१ तेपिजानन्ति S. ॥ २ °लक्षणाः। सव्यपरिच्छेदका M. ॥ लक्षणा। सव्यपरिच्छेदका Y. ॥ ३ तीर्थकृन्नामकर्मसम्बद्धोदयेन M. Y. ॥ ४ आयरीति M. Y. ॥ ५ गौतमीत्युक्ता M. Y. ॥ ६ मानदेवो° S. ॥ ७ यदा S. ॥ ८ तद्ध्यानेन सारस्वतादिसिद्धिः। अर्हत्त्वं S. ॥ ९ लब्धी अनु° M. Y. ॥ १० साधना। द्वितीयं S. ॥ साधनादीनां। द्वितीयं च Y. ॥



इय संतपयसमेया थुणिया सिरिमाणदेवसूरीहिं।
जिणसूरिसा[1]हुणो सइ दिंतु थुणंताण सिद्धिसुहं॥ [मानदेवस्तव गा० १०]

यस्यामवस्थायां यो ध्येयो ध्यायते तत् फलं तात्पर्यार्थः।

## अथात्मगुह्यम्

भविष्या वर्तमाना ये सूरयः स्वपरगच्छगाः।
पतित्वा पादयोस्तेषां तावद् विज्ञपयाम्यदः॥१॥

सर्वसावद्यसेव्यस्मि तादृग् [2]विद्यागुरुर्न मे।
तादृग् मन्त्रगुरुर्नाभूद्धतो लिङ्गोपजीवकः॥२॥

एवंविधोऽपि जिज्ञासुर्जातो भगवदागमे।
नामाचार्यपद[3]प्राप्तः किञ्चिज्ज्ञः कर्मयोगतः॥३॥

आगामिबोधिलाभायैकदा शत्रुञ्जये गतः।
दुःखकर्म क्षपयितुमादिनाथं विवन्दिषुः॥४॥

सिद्धिक्षेत्रस्थितो ध्यायन् युगादिजिनपुंगवम्।
मन्त्रस्वरूपजिज्ञासुस्ततो जातो[4]ह्युपोषितः॥५॥

चतुर्विंशाक्षरप्राप्तिर्जातेयं पञ्चमे दिने।
तत ऊहं[5] कुर्वतो मे तत्राविर्भूतमीदृशम्॥६॥

तत्र प्रश्नाक्षरं जातं [6]प्रश्नाक्षरप्रमाणतः।
ईदृशं गदितं सर्वं न वेद्मि किन्तु [7]तत्त्वतः॥७॥

---

१ साहुणे सइ दिंतु S. साहुणो मह दिसंतु M. Y.॥ २ दीक्षागुरु° M. Y.॥ ३ प्राप्तिः किंचित्प्राक्कर्मयोगतः M. Y.॥ ४ °प्युपो° M. Y.॥ ५ ऊर्द्धं M. Y.॥ ६ तदक्षरप्रमाणतः M. Y.॥ ७ तात्त्विकम् M. Y.।



मदीयं वितथं वाक्यं सत्यं वेति [1]न वेद्यते ।
प्रायः प्रमादयुक्तानां [2]दुःषमायामहं नृपः ॥ ८ ॥
स्वरूपमस्य विज्ञाय क्रियतां यद्धि रोचते ।
मिथ्या मे दुष्कृतं वास्तु मा भूदाशातना कदा ॥ ९ ॥
यद्यसत्यं तदा सिद्धसमक्षं गीतार्थसमक्षमालोचना ॥

स्वाहा होमस्मरणार्थम् । यदक्षमुष्टित्रयं तत् त्रिभुवनव्यवहाररूपम् । मुष्टिप्रायो जगद्व्यवहारो जिनशासनस्य । प्रस्तरिका होमकुण्डचिन्ता [3]वासक्षेपो होतव्यद्रव्याणि । पूर्वं [4]जपो ध्यानं होमश्च नित्यसाधनेत्याकूतम् । द्वादशकूटाक्षरस्थापना द्वादशारकालचक्ररूपा । यतोऽक्षररूपः कालः । षष्ट्यक्षरमितं पलम् । षष्टिपलाः [5]कला । कूटाक्षराणि न ध्याने, पूजायां स्थाप्यन्ते । तेन श्री [6]मानदेवेन द्वादशपदीस्तुतावेव मन्त्राक्षराणि [7]मन्त्रपीठमन्त्राक्षराणि कल्पोक्तानि । पञ्चभूतात्मिका क्षि प ॐ स्वा हा आत्मरक्षा पञ्चशून्यात्मिका च ह्लाँ ह्लीँ ह्लूँ ह्लौँ ह्लः । [8]अन्तस्तत्त्वं न गुरोर्ज्ञातम् । स्वसंवेदनतो ज्ञातम् । कूटाक्षरवेदनं सद्गुरोः । शेषमादेशतः । पूर्वं शतत्रयश्लोकसंख्या । एवंरूपो गौतमन्यासो द्वात्रिंशच्छ्लोकप्रमाणः अष्टो[9]त्तरविद्याशतकलितः । साम्प्रतं विद्याष्टकगर्भितः ।
(१) (२) (३) (४) (५)
विद्यापीठं विद्या उपविद्या मन्त्रपीठं मन्त्रराजः । [10]एतेषां व्यवहारमात्रतो न्यासः । न तात्त्विकेन ।

गौतमस्वामिमन्त्रोऽयं सम्यगाराधितो नरैः ।
चिन्तामणिरिवाजस्रं चिन्तितार्थप्रसाधकः ॥ १ ॥
दारिद्र्यकन्दनाशाय विघ्नव्रातविनाशिने ।
नमोऽस्तु मन्त्रराजाय विश्वलक्ष्मीप्रदायिने ॥ २ ॥

१ न विद्यते M. S. ॥ २ दुःखमायामसुनृतं M. Y. ॥ ३ वासनिक्षेपो M. Y. ॥ ४ जपो होमश्च S. ॥ ५ कलाः S. ॥ ६ मानदेवद्वादशपदी S. ॥ ७ मन्त्रपीठं M. Y. ॥ ८ अन्तस्तत्त्वं संवेदनतो ज्ञातं न गुरोः शेषमादेशतः M. Y. ॥ ९ °त्तरशतविद्यापरिकलितः M. Y. ॥ १० एषां M. Y. ॥





या च लोके महासिद्धिर्या च लोकोत्तरे मता ।
सम्पद्यते स्फुटं सा सा [1]मन्त्रराज तव स्मृतौ ।। ३ ।।

अतीतानागता ये च ये जिनेन्द्राश्च सम्प्रति ।
ते सर्वे वन्दिता नित्यं मन्त्रराज तव स्मृतौ ।। ४ ।।

गौतमेन कृतः पूर्वं तेन गौतम उच्यते ।
[2]सुधर्मस्वामिनस्तीर्थं सुधर्मा तेन सम्प्रति ।। ५ ।।

यावत् त्वं वर्तसे नाथ तावत् तीर्थकृदागमः ।
तावज्ज्ञानं सभेदं च तावत् [3]तीर्थप्रवर्तना ।। ६ ।।

[4]सर्वदेवमयोऽसि त्वं [5]पुरुषोत्तममयोऽसि च ।
तव त्रैलोक्यनाथत्वं मन्त्रराज [6]ततः प्रभो ।। ७ ।।

ध्रुवं तीर्थकरोऽसि त्वं ध्रुवं गणधरोऽसि च ।
भवेऽत्र वर्तमानोऽपि स्वर्गो मोक्षोऽसि पुण्यदः ।। ८ ।।

सिद्धाष्टकमिदम् । श्लोकद्वयं गुरुभिर्दत्तम् । श्लोकषट्कमादेशेन [7]किञ्चिद् ज्ञातं श्रीशंखेश्वरप्रभुश्रीपार्श्वनाथादेशेन, सर्वं प्रभूतं श्रीपुण्डरीकादेशेन । यद् गुरुणा दत्तं तत् तस्य प्रमाणम् । आत्मसंवेदनस्मरणार्थं[8] निगदितम् ।

---

१ °राजस्तव S. ।। २ सुधर्मस्थापितस्तीर्थे S. ।। ३ तीर्थं प्रवर्तते M. Y. ।। ४ °मयोपि त्वं M. Y. ।। ५ मयोपि च M. Y. ।। ६ तव प्रभो S. ।। ७ किञ्चित् श्री शंखेश्वरप्रभुपार्श्वोपदेशेन M. Y. ।। ८ °णार्थं गदितम् M. Y. ।।



[1]→ इतोऽनन्तरं गणधरवलयमन्त्रः प्रत्यन्तरे। स च लघुपत्रेषु वाच्यः। ← वैखरी, मध्यमा, पश्यन्ती, परा, भाषाभेदाश्चत्वारः[2]। वैखरी स्पष्टोच्चारणम्। मध्यमा [3]सर्ववर्णस्थानव्यापकत्वम्। पश्यन्ती अर्थदृष्टिः। परा ध्वनिवर्जितसर्ववर्गस्थानस्पर्शनम्[4]। अनया रीत्योच्चारणीयः[5]।

मन्त्रजातिश्चतुर्धा—[6]आणव–कार्मज प्रवर्तक–निवर्तकाः। [7]आणवा सत्कर्मबीजम्। कार्मजा सत्कर्मोदयः। प्रवर्तका सत्कर्मप्रवृत्तिः। निवर्तका मोक्षः। चतुर्जातीयो मन्त्रः। यावन्मात्रः कर्मक्षयोपशमस्तावन्मात्रा सिद्धिः। अतश्चतुष्पीठ[8]युक्तो नित्यं मन्त्रराजो ध्येयः। ईदृशमेतत् सर्वं मया आदेशेन निगदितम्।

---

← एतदन्तर्गतपाठस्थाने M. Y. प्रत्योः। गणधरवलयमन्त्रयुक्त एवंविधः पाठ
१ →
उपलभ्यते— "ॐनमो जिणाणं, ॐ नमो परमोहिजिणाणं, ॐ नमो अणंतो–
हिजिणाणं, ॐ नमो कुट्ठवुद्धीणं, ॐ नमो वीयवुद्धीणं ॐ नमो पयाणुसारीणं, नमो संभिन्नसोयाणं,
नमो सयंवुद्धाणं, नमो पत्तेयबुद्धाणं, नभो उज्जुमईणं, नमो विउलमईणं, नमो चउद्दसपुव्वीणं, नमो
दसपुव्वीणं, नमो एक्कारसंगीणं, नमो अट्ठंगमहानिमित्तकुसलाणं, नमो विउव्वणईड्ढिपत्ताणं, नमो
विज्जाहरसमणाणं, नमो चारणसमणाणं, नमो पन्नसमणाणं, नमो आगासगामीणं, नमो आसीविसाणं,
नमो दिट्ठीविसाणं, नमो उग्गतवाणं, नमो महातवाणं, नमो घोरतवाणं, नमो घोरगुणवंभयारीणं नमो
आमोसहिपत्ताणं, नमो विप्पोसहिपत्ताणं, नमो खेलोसहिपत्ताणं, नमो जल्लोसहिपत्ताणं, नमो सव्वोसहिपत्ताणं,
नमो मणवलीणं, नमो वयणवलीणं, नमो कायवलीणं, नमो खीरासवलद्धीणं, नमो (खीरासवाणं M.),
नमो सप्पिआसवाणं, नमो अमियासवाणं, नमो अक्खीणमहाणसलद्धीणं, नमो वद्धमाणवुद्धिसिद्धीणं, नमो
सव्वसिद्धाययाणं (सिद्धायणं M.) ॐ वग्गु वग्गु फग्गु फग्गु निवग्गु निवग्गु सुमणे सोमणसे महु महुरे
किरियाए पिरियाए सिरियाए आयरिआए। किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरि-
कालि आयरियकाली वग्गु निवग्गु निवग्गु निवग्गु फग्गु निफग्गु (वग्गु वग्गु निवग्गु निवग्गु फग्गु
फग्गु M.) सुमणे सोमणसे जए विजए अपराजिए स्वाहा। गणधरवलयमन्त्रः। सर्वविषयोऽयम्। इयं
वाचना केषाञ्चिन्न जा (ज्ञा ?) यते। परं वाह्यवलये लेख्यः पूजनीयश्च।" २ °त्वारोस्य S. ॥
३ वर्णव्यापकं M. Y. ॥ ४ °स्थानास्पर्शनं S.। °स्थाव्यस्पर्शनं M. ॥ ५ °च्चारणीयाः M. Y.
°च्चरणीयः S. ॥ ६ अणवः कार्मजः प्रवर्तकः निवर्तकः Y. ॥ अणवः कार्मजप्रवर्तकनिवर्तकः M. ॥
७ आणवाः S.। अणवा M. Y.। ८ युक्तो मन्त्रराजो M. Y. ॥



यदि सत्यं तदास्तु मे दुष्कर्मक्षयाय भव्योपकाराय। अथासत्यं तदा मिथ्या-दुष्कृतम्, न जातु प्रायश्चितमनन्तसंसारित्वं दुर्लभबोधिबीजत्वम्, [1]यतो मयाऽ-शठेन रचितमिदमीहासमीहां विना। श्रीपुण्डरीकादेशेन [2]यदत्र मध्येऽस्ति तत् ज्ञानं परिभावयन्तु गीतार्थाः, मा कुप्यन्तु । अन्तःकरणशुद्ध्या चोक्तम्। शील-संयमचारित्रविहीनोऽहं कथं सम्प्रीणितो भगवता एतन्न ज्ञातं न ज्ञायते। पञ्चमोपवासेन समादिष्टमेतत्। अवितथम्। जैनो धर्मश्च विजयताम्।

श्री देवाचार्यगच्छसमुद्भूतसूरिशिष्यलवलवेन रचितं विद्याकल्पसंग्रहे दुर्गपदविवरणं समाप्तमिति। ग्रन्थाग्रं ॥२३८॥



१ यतोऽशठेन मया एतद्विरचितमीहा° M. Y.॥ २ अस्य मध्ये यदस्ति ज्ञानं परिभावयितु गीतार्था मा कुप्यन्तु। अन्तःकरणवृत्त्या चोक्तम् शीलसंयमचारित्रविहीनोऽहं कथं संप्रीणतो भगवतां। एतज्ज्ञानं न ज्ञायते। पंचमोपवासेनमादिष्टमेतत्। श्रीदेवसूरिशिष्यविरचितसूरिमन्त्रकल्पः समाप्तः M.Y.॥





# लब्धिपदफलप्रकाशकः कल्पः[1]

ॐ नमो अरहंताणं नमो जिणाणं ह्लाँ ह्लीँ ह्लूँ ह्लौँ ह्लः अप्रतिचक्रे फट् विचक्राय स्वाहा। ॐ ह्लीँ अर्हं अ सि आ उ सा [2]ह्लौँ ह्लाँ स्वाहा। एतत् [3]सर्वं प्रयोजनीयम्, [4]विसूचिकाशान्तिर्भवति १।

'ॐ नमो अरहंताणं नमो जिणाणं [5]ह्लाँ' पुष्प १०८ जपेत्, ज्वरनाशनम् २।

'णमो परमोहिजिणाणं ह्लाँ' शिरोरोगनाशनम् ३।

'णमो सव्वोहिजिणाणं ह्लाँ' अक्षिरोगनाशनम् ४।

'णमो अणंतोहिजिणाणं' कर्णरोगं नाशयति ५।

'णमो कुट्ठबुद्धीणं' शूल–गुल्म–उदररोगं नाशयति ६।

'णमो बीजबुद्धीणं' श्वास–हिक्कादि नाशयति ७।

'णमो पदाणुसारीणं' परैः सह विरोधं कलहं नाशयति ८।

'णमो [6]संभिन्नसोयाणं' कासं नाशयति ९।

'[7]णमो पत्तेयबुद्धाणं' [8]प्रतिवादिविद्याच्छेदनम् १०।

'[9]णमो सयंबुद्धाणं' कवित्वं पाण्डित्यं भवति ११।

---

१ अस्य लब्धिपदफलप्रकाशककल्पस्य तदनन्तरं फलविशेपप्रकाशकस्य आम्नायस्य च सम्पादनं प्रतिद्वयमवलम्व्य विहितम्। एका साराभाईनवावसत्का प्रति S. इतिः संज्ञिता। अपरा आचार्य श्री विजयनन्दनसूरिमहाराजसत्का N. इति संज्ञिता। २ द्रौँ द्रौँ N.॥ ३ सर्वत्र N.॥ ४ विशूचिका S.॥ ५ ह्रीँ S.॥ ६ °सोदाणं N.॥ ७ नमो N.॥ ८ प्रतिविद्या° S.॥ ९ नमो N.॥



'णमो बोहिबुद्धाणं' [1]अन्यतरगृहीते श्रुते एकसंघो भवति ५२[2]दिनं यावज्जपेत् १२ ।

'[3]णमो [4]उज्जुमईणं' शान्तिकं भवति, दिन २४ यावज्जपेत् १३ ।

'णमो [5]विउलमईणं' बहुश्रुतत्वम्, लवणाम्लवर्जं भोजनम् १४ ।

'णमो दसपुव्वीणं' सर्वाङ्गवेदी भवति १५ ।

'णमो चउदसपुव्वीणं' जापः १०८ [6]स्वसमय-परसमयवेदी[7] भवति १६ ।

'णमो अट्ठंगनिमित्तकुसलाणं' जीवित-मरणादिकं जानाति १७ ।

'णमो विउव्वणरिद्धिपत्ताणं' काम्यवस्तूनि प्राप्नोति, दिन २८ जापः १८ ।

'णमो विज्जाहराणं' उद्देशप्रदेशमात्रं खे गच्छति १९ ।

'णमो चारणाणं' चिन्तामुष्टिपदार्थस्वरूपं जानाति २० ।

'णमो पण्हसमणाणं' आयुरवसानं जानाति २१ ।

'णमो आगासगामीणं' अन्तरिक्षे योजनमात्रं गमयति २२ ।

'णमो आसीविषा(सा)णं' विद्वषणं पार्श्वाष्टकमन्त्रक्रमेण २३ ।

'णमो दि[9]ट्ठीविसाणं' स्थावर जङ्गम-कृत्रिमविषं नाशयति २४ ।

'णमो उग्गतवाणं' वाचास्तम्भनम् २५ ।

'णमो दित्ततवाणं' रविवाराद् [10]दिनत्रयं मध्याह्ने जापः, सेनास्तम्भ २६ ।

'[11]णमो तत्ततवाणं' जलं परिजप्य पिबेत्, अग्निस्तम्भः २७ ।

'णमो महातवाणं' जलस्तम्भनम् २८ ।

'णमो घोरतवाणं' विष-सर्प्प-मुखरोगादिनाशः २९ ।

'णमो घोरगुणाणं' लूतागर्भपिटकादि[12] नाशयति ३० ।

---

१ गृहीत N. । २ दनि N. । ३ नमो N. ४ °मदीणं N. । ५ °मदीणं N. । ६ स्वपरस्मसय N. । ७ वेदित्वं N. । ८ आकास° S. । ९ दिट्ठि° N. । १० दिनत्रिकं S. । ११ नमो N. । १२ पिटिकादि S. ॥



'णमो घोरगुणपरक्कमाणं' दुष्टमृगादीनां भयं नाशयति ३१।

'णमो घोरगुण[1]बंभचारीणं' ब्रह्मराक्षसादि नाशयति ३२।

'णमो आमोसहिपत्ताणं' जन्मान्तरवैरेण पराभवं न करोति ३३।

'णमो खेलोसहिपत्ताणं' सर्वानपमृत्यूनपहरति ३४।

'णमो जल्लोसहिपत्ताणं' अपस्मारमवलेपं चित्तविप्लवं नाचयति ३५।

'णमो विप्पोसहिपत्ताणं' गजमारी शाम्यति ३६।

'णमो सव्वोसहिपत्ताणं' मनुष्यमरकं नाशयति ३७।

'णमो मणबलीणं' अश्वमारी शाम्यति ३८।

'णमो वचोबलीणं' अजमारी शाम्यति ३९।

'णमो कायबलीणं' गोमारी शाम्यति ४०।

'णमो अमयसवीणं' समस्तमुपसर्गं शमयति ४१।

'णमो सप्पिसवीणं' एकाहिक-द्व्याहिक-त्र्याहिक-चातुर्थिक-पाक्षिक-मासिक-सांवत्सरिक-वातादिसमस्तज्वरं नाशयति ४२।

'णमो खीरसवीणं' गोक्षीरं परिजप्य पिबेत्, दिन २४, क्षयं कासं गण्डमालादिकं च नाशयति ४३।

'णमो अक्खीणमहाणसाणं' आकर्षणं ४४।

'णमो लोए सव्वसिद्धायदणाणं' राजपुरुषादिवश्यं ४५।

'ॐ [2]णमो भगवदो महदि महावीरवड्ढमाणबुद्धिरिसीणं' चेतःसमाधिमवस्थायां प्राप्नोति ४६।

इति लब्धिपदफलप्रकाशकः कल्पः ॥

१ ब्रह्मचारीणं N. ॥ २ नमो N. ।



## [फलविशेषप्रकाशक आम्नाय:]

'ॐ नमो [1]सामण्णकेवलीणं स्वाहा' एतल्लब्धिपदं रक्तध्यानेन पद्मासनेन [2]विद्रुमाक्षमालया अष्टोत्तरसहस्रं जपेद् रजनौ। जापानन्तरं न केनापि समं वदेत्। लघुनिरोधमपि न कुर्यात्। यं कमपि संदिग्धमर्थं मनसिकृत्य शुचिरव्यंगवसनः श्रस्तरे शेते तस्यार्थस्य निश्चयं कश्चित् स्वप्ने आगत्य वदति। अथवा कश्चित् कंचिदर्थं याचितो न दत्ते, तमनुकूलयितुम् इदं लब्धि-पदमष्टोत्तरसहस्रं शुचिर्मौनी रक्तध्यानेन पद्मासनेन विद्रुमाक्षमालया जपेत्, यियाचिषितपुरुषस्य तस्यां रजनौ स्वप्नो भवति। ततश्च इष्टलाभः। यत्किमपि चिन्त्यते तस्योपदेशः संपद्यत इति तत्त्वम्।

[3]*इति विशेषाम्नायाः १४ चतुर्दशरत्नप्रायाः श्रीगुरुसंप्रदायादाप्यन्ते॥*

हरिन्मणिवर्णं प्रणवं भ्रूयुगान्तरे यः स्मरेत् अष्टोत्तरं शतमष्टोत्तर-[4]सहस्रमधिकं वा तस्य सद्यो लाभ इति।

पूर्वाभिमुखोऽव्यङ्गवसनो विद्रुमजपमालया रक्तध्यानेन निशीथे [5]यदि संपूर्णं सूरिमन्त्रं १०८ वारं जपेत् तदाऽहोरात्रमध्ये विवक्षित ईश आकृष्ट इवायाति।



१ सामन्न° N.। २ °मालया रजनौ अष्टोत्तरसहस्रं जपेत्। जापादनु न केनापि वदेत् N.। ३ * * एतदन्तर्गतः पाठः N. प्रतावेवास्ति। ४ °स्रं वा S.॥ ५ यदेतत् सं° S.।





# अञ्चलगच्छाम्नायानुसारेण

## वाचनाचार्य–सूरिमन्त्रादीनां विचारः

[ वाचनाचार्यमन्त्रः ]

ॐ ह्रीं नमो अरिहंताणं । ॐ ह्रीं नमो सिद्धाणं । ॐ ह्रीं नमो आयरियाणं । ॐ ह्रीं नमो उवज्झायाणं । ॐ ह्रीं नमो लोए सव्वसाहूणं । पदवर्ण ४५ । ॐ ह्रीं नमो भगवओ अरहंतस्स महइ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महइ महाविज्जा ४२ । ॐ वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजये जयंते अपराजिए अणिहए ॐ ह्रीं स्वाहा ४४ । एवं अक्षर १३१ । इति वाचनाचार्यमन्त्रः । प्रवर्तिन्या अपि एष एव मन्त्रः । श्रीमदञ्चलगच्छाम्नायः ।

नान्दीपद ५ सत्काक्षर ४५ युक्तमन्त्राक्षर ८६ संयोगे संख्या १३१ । उक्तं च––

नन्दीपएसु पंचसु पणयालीसं हवंति किर वन्ना ।
मंतक्खरछासीई इगतीसहियं सयं सव्वे ॥ १ ॥

[ अथ सूरिमन्त्रः ]

॥ अर्हं ॥

श्रीसूरिमन्त्रे श्रीचन्द्रवाचनायां सप्तमेरुयुक्तायां पञ्च पीठानि । तत्र प्रथमपीठे लब्धिपदानि षोडश । तत्र प्रथमपदे अक्षर ५, द्वितीये ७,

१ तुलनार्थं दृश्यतां पृ०. १३२–१३३:इत्यादि ॥





तृतीये ९, चतुर्थे ८, पञ्चमे ९, षष्ठे ११, सप्तमे ६, अष्टमे ९, एकादशे ७, द्वादशे १०, त्रयोदशे ७, चतुर्दशे ७, पञ्चदशे १५, षोडशे १४, एवं लब्धिपदेषु अक्षर १४३। ततः 'एएसिं सव्वेसिं' इत्यादि 'पसिज्झउ' पर्यन्तम् अक्षर २९। एवं प्रथमपीठे अक्षर १७२। अत्र कर्मक्षयार्थं लब्धिपदानि पीठानि च परमेष्ठि-मुद्रया निर्मुद्रं वा प्रणव–ह्रीं–श्रींरहितानि केवलान्येव स्मरेदित्याम्नायात् बीजाक्षररहिता लब्धिपदाक्षरसंख्या उक्ता।

इति प्रथमं विद्यापीठम्।

द्वितीयपीठे 'ॐ नमो भगवओ' इत्यादि 'विज्जा' यावत् अक्षर ३३, एषा बाहुबलीविद्या स्वप्नार्थम्। ततः 'वग्गु वग्गु' इत्यादि 'महुमहुरे' यावत् अक्षर २२, एषा सौभाग्यविद्या। ततो 'हिलि हिलि किलि किलि' इत्यष्टा-क्षराणि अन्यत्रानुक्तान्यपि स्वगुरूक्तत्वाद् भणितानि। ततः 'इरि कालि' इत्यादि 'आयरिय कालि' यावत् अक्षर ३०। एवं द्वितीयपीठे अक्षरसर्व-संख्या ९३।

इति द्वितीयं महाविद्यापीठम्

ततः तृतीये उपविद्यापीठे 'इरियाए' इत्यादि 'कालि महाकालि' यावत् अक्षर ३५।

इति तृतीयं पीठम्।

चतुर्थं तु मन्त्रपीठम्। तत्र 'इरि इरि कालि' इत्यादि 'आयरिय आयरिय कालि यावत् अक्षर ४६॥

इति चतुर्थं पीठम्।

पञ्चमं मन्त्रराजपीठम्। तत्र 'इरिमेरु' इत्यादि अक्षर ३०, स्वाहा–सहित ३२। एवं सकलश्रीसूरिमन्त्रे अक्षर ३७८, श्लोक ११ अक्षर २६॥

इति श्रीअञ्चलगच्छे श्रीसूरिमन्त्राम्नायः चिरं नन्दतु।



## अथ श्रीउपाध्यायमन्त्रः

ॐ नमो अरिहंताणं। ॐ नमो सिद्धाणं। ॐ नमो आयरियाणं। ॐ नमो उवज्झायाणं। ॐ नमो सव्वसाहूणं ३८। ॐ नमो ओहिजिणाणं। ॐ नमो परमोहिजिणाणं। ॐ नमो सव्वोहिजिणाणं। ॐ नमो अणंतोहिजिणाणं। ॐ नमो अरिहओ भगवओ महावीरवद्धमाणसामिस्स सिज्झउ मे भगवई महइ महाविज्जा ७४। वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जए विजए जयंते अपराजिए अणिहए ॐ ह्रीं स्वाहा ४३, उपाध्यायमन्त्रः। श्रीमहत्तराणामप्येष मन्त्रः। सर्वाक्षर १५५।

अडतीसं परमिट्ठीपएसु नंदीपएसु चउसत्त।
विज्जक्खरतिगचउरो पणवन्नहियं सयं सव्वे' ॥१॥

---

१ इत: परं S. प्रतौ सूरिमन्त्रपटलेखनविधिर्दृश्यते। N. प्रतावप्ययं विधिरेकत्र पृथगुपलभ्यते। किन्तु मेरुतुङ्गसूरिविरचिते सूरिमुख्यमन्त्रकल्पे [पृ० १५५ पं० ७–पृ० १५७ पं० १३] प्रायोऽक्षरश एवास्य सूरिमन्त्रपटलेखनविधेर्दर्शनादत्रास्माभिर्न दीयते। किन्तु सूरिमन्त्रपटलेखनविधेरनन्तरं S. प्रतौ सूरिमन्त्रेण सहासम्बद्धा अपि केचन मन्त्राम्नाया दृश्यन्ते तेऽत्र टिप्पण्यामुपन्यस्यन्ते—

"वाचनाचार्यमन्त्रश्चायम्—ॐ ह्रीं नमो अरिहंताणं ५। ॐ नमो अरिहंताणं। नमो सिद्धाणं। नमो अणंतजिणाणं। नमो सिद्धजोगधराणं। नमो सव्वेसिं विज्जाहरपत्ताणं। कयंजली इमं विज्जारायं पउंजामि। इमा मे विज्जा पसिज्झउ आरकालि बालकालि पंसुखररेओआवतवोचडि स्वाहा। सत्त कक्कराओ भूमीओ घित्तूण क्रियाणकोपरि ध्रियन्ते। लघु विक्काइ। तुलसीपत्ताई सत्ताभिमंतिऊण कन्ने कीरंति जं मग्गइ तं लहइ। सत्ताभिमंतिओ कुमारीसुत्तदोरओ हत्थे वंधिओ कुवियं पसीयइ। घरकक्कराओ सत्त घित्तूण सत्त वारा जावियाहिं गावी सुणही वा आहम्मइ वहु गम्मइ। तिल्लं जविऊण जरिओ भक्खिज्जइ सज्जो हवइ। सप्पदट्ठुस्स पाणीयं सत्ताभिमंतियं पाइज्जइ विसं जाइ। चूर्णि:।

'ॐ नमो भगवओ गोयमस्स गणहारिस्स अक्खीणमहाणसस्स सव्वाणं वत्थाणं सव्वाणं पत्ताणं सव्वाणं वत्थूणं ॐ अक्खीणमहाणसिया लद्धी हवउ मे मे स्वाहा।' उपयोगवेलायां सर्वं वा देयम्। वस्त्वभिमन्त्र्य देयम्।

ॐ सिद्धिः। मायाबीजाराधनविधिः षट्कर्मसु लिख्यते। तत्र त्रिधा शुद्धिः ब्रह्मव्रतः एकाशनो विहितस्नानो विभूषितांगः शुचिवसनः प्राङ्मुख उत्तराभिमुखो वा स्थिरासने समुपविश्य 'ॐ भूरिसी



भूतधात्री सर्वभूतहिते भूमिशुद्धिं कुरु कुरु स्वाहा'। त्रिर्वासक्षेपपूर्वकं भूमिशुद्धिः।. 'ॐ अमले विमले०' अनेन मन्त्रेण सर्वाङ्गस्पर्शनेन स्नानम्।' ॐ विद्युत्फुलिंगे महा०' अनेन मन्त्रेण भुजमध्यस्पर्शनेन कल्मषदहनम्। 'ॐ अमलाय०' हृदयस्पर्शेन हृच्छुद्धिः। 'क्षि प ॐ स्वा हा। हा स्वा ॐ प क्षि' पञ्चाङ्गस्पर्शनेनांगरक्षा। 'ॐ कु रु कु ल्ले स्वा हा। हा स्वा ल्ले कु रु कु ॐ' सप्तस्थानस्पर्शनेन सकलीकरणम्। तं विधिं समाप्य विद्वेषणाकर्षणचालनेषु हौं (हुं) वौपडंतं फडिति प्रयोज्यम्।

वश्ये वषट् वैरिवधे तथा घे स्वाहा स्वधा शान्तिकपौष्टिकेषु ॥ २५ ॥

[मं० चिं० भा० २ पृ. २७६]

स्फु(स्फ)टिक–प्रवाल–मुक्ता–चामीकर–प(पु)त्रजीवकृतमणिभिः।
अष्टोत्तरशतं जाप्यं शान्त्याद्यर्थं करोति बुधः ॥१॥
मोक्षाभिचारशान्तिवश्याकर्षेषु योजयेत् क्रमशः।
अंगुष्टाद्यङ्गुलिका मणयोऽङ्गुष्ठेन चाल्यन्ते ॥२॥
पूर्वाह्णे वश्यकर्माणि मध्याह्ने प्रीतिनाशनम्।
उच्चाटनं चापराह्णेऽपि सन्ध्यायां मारणं ध्रुवम् ॥३॥
शान्तिकर्माण्यर्धरात्र(त्रे) तु प्रभाते पौष्टिकं तथा।
वश्यमुक्तानि कर्माणि सव्यहस्तेन योजयेत् ॥४॥
उदयार्क–रक्त–शशधर–धूम(म्र) हरिद्रा–ऽसिता वर्णाः।
आकृष्टि–वश्य–शान्तिक–विद्वेषण–रोधसमयेषु (रोधवधसमये) ॥२६॥

[मं० चिं० भा० २ पृ. २७६]

एवं सर्वस्थितिं दत्त्वा चतुष्किकापदं वा सम्यक् प्रक्षाल्य रहसि आमघटोत्कीर्णं वा ताम्रपत्रोत्कीर्णं कुङ्कुमस्वस्तिकोपरिगतं मायाबीजं संस्थाप्य प्रथमकोणे 'गूं गणाधिपतये नमः' इत्यक्षरन्यासपूर्वं गणपतिं पूजयेत्। द्वितीयकोणे 'व्रूं वुटकनाथाय नमः' इति वुटकनाथपूजा। तृतीयकोणे 'दुं दुर्गायै नमः' इति दुर्गापूजा। चतुर्थकोणे 'क्षौं क्षेत्रपालाय नमः' इति क्षेत्रपालपूजा।

एवं सर्वाधिष्ठायकान् संपूज्य विहितदीपोद्‌बोधः मायाबीजोपरि नारजीयुजं धृत्वा दीपशिखायां न्यस्तदृष्टिः जाप्यं विदध्यात्। अन्तरान्तरा द्राक्षारसेन तर्पणं विधेयम्। पट्टस्योपरि एवं प्रतिदिनं जापक्रमेण लक्षं यावत् परिपूर्य पूजासमाप्तौ दशांशेन होमः कार्यः।

तस्यायं विधिः—वृत्तं कुण्डं मृन्मयं कृत्वा मध्ये षट्कोणयन्त्रसहितं वा ताम्रपत्रं स्थाप्य तन्दुल–शर्करा–दुग्धेन बदिरप्रमाणां गुटिकां कृत्वा होमयेत्। खदिरसमिधयो नवाङ्गुल(ला) विधेयाः। इत्येवं होमविधिः।

'ॐ ह्रीं हंसः' बन्दिमोक्षे शुक्लध्यानेन बद्धोपरि अमृतवर्षं चिन्तयेत्। 'ॐ ह्रीं वषट्' रक्तध्यानेन चिन्तयेत्, जगद्वशीकरणं सिद्धिः। 'ॐ ह्रीं' विद्वेषणे धूम (म्र) ध्यानेन। 'ॐ ह्रीं फुट्' उच्चाटने कृष्णध्यानेन। 'ॐ ह्रीं संवौषट्' आकर्षणं सन्ध्यारुणम्। 'ॐ ह्रीं स्वाहा' शान्तिके चन्द्रज्योत्स्ना। 'ॐ ह्रीं स्वधा' पौष्टिके वल(उज्)ज्वलध्यानम्। 'ॐ ह्रीं घे घे' मारणे कृष्णध्यानम्, आरीठाजपमाली। श्रीर्भवतु।''





# श्रीसूरिमन्त्रस्मरणविधिः[1]

## श्रीराजगच्छीयश्रीहंसराजसूरिपट्टागतश्रीविजयप्रभसूरीणां

## तदन्येषां च सूरिमन्त्राः

॥ अर्हं ॥

श्रीसूरीणां मन्त्रस्मरणविधिर्लिख्यते । यथा—पवित्रगात्रीभूय ऐर्यापथिकीं प्रतिक्रम्य देवतावसराग्रे ततोऽङ्गन्यासः ।

ॐ सिद्धीः । ॐ अर्हद्भ्यो नमः । ॐ गुरुभ्यो नमः । [ॐ]परमगुरुभ्यो नमः । ॐ अपरापरगुरुभ्यो नमः ।

प्रथमं स्नानं विधाय धौतवस्त्रे परिधाय हेममयीं मुद्रां करे कृत्वा एकचित्तीभूय मन्त्रस्नानम्——

'ॐ विमलाय विमलनिर्म्मलाय सर्वतीर्थजलाय पं २ पां २ वं २ वां २ झं झ्वां झ्वीं अशुचिः शुचिर्भवामि स्वाहा' स्नानम् ।

'ॐ विमलाय विमलचित्ताय झ्वीं क्ष्वीं स्वाहा ।' हृदयस्पर्शः ।

'ॐ विद्युत्स्फुलिंगे महाविद्ये सर्वकल्मषं दह दह स्वाहा ।' कराभ्यां भुजयोः स्पर्शनेन कल्मषदहनम् ।

'ॐ कु रु कु ल्ले स्वा हा हा स्वा ल्ले कु रु कु ॐ' दृढमुष्ट्योच्चार्यः । ततः सकलीकरणं 'क्षि प ॐ स्वा हा हा स्वा ॐ प क्षि' । चरण १ जानु २ हृदय ३ मुख ४ शीर्ष ५ स्पर्शनेन चरणाभ्यां शीर्षे (र्षं) शीर्षाच्चरणौ यावत् स्पर्शः ।

'ह्राँ ह्रीँ ह्रूँ ह्रौँ ह्रः' वार ५ समस्तकराङ्गुल्यग्रेषु जपनीयोऽयं मन्त्रः ।

'ॐ नमो अरिहंताणं' हृदये १ । 'ॐ नमो सिद्धाणं' मुखे २ । ॐ नमो आयरियाणं' शिरसि ३ । 'ॐ नमो उवज्झायाणं' कवचम् ४ 'ॐ नमो सव्वसाहूणं'

---

[1] जैनानन्दपुस्तकालय[सुरत]स्थां पत्रत्रयात्मिकामेकामेव प्रतिमवलम्ब्यात्र मुद्रितमेतत् सर्वम् । तुलना पृ०— १०८, १२८, १४४ ।



अस्त्रम् ५। अनेन मन्त्रेण यथोक्तस्थाने करन्यासेनात्मरक्षा। 'ततः ॐ ह्रीं क्ष्वीं सर्वोपद्रवात् रक्ष रक्ष स्वाहा' इत्यात्मरक्षा।

'ॐ नमोऽर्हद्भ्यश्चतुर्विशतितीर्थकरेभ्यो, रक्ष रक्ष आत्म रक्ष रक्ष [1]भूतरक्षपिशाच रक्ष रक्ष शाकिनी रक्ष रक्ष स्वाहा' इत्यात्मरक्षा। वार ४ चतुर्दिक्षु स्मरणम्। अनेन दिग्बन्धः।

ततो भूमिशुद्धिरनेन—'ॐ भूरसि भूतधात्रि सर्वभूतहिते भूमिशुद्धिं कुरु कुरु स्वाहा।' वासैर्भूमिपूजा। छोटयित्वा झोलिकां वासक्षेपः।

'ॐ आं क्रों ह्रीं श्रीं भगवन् श्रीगौतम! सर्वलब्धिसंपन्न! आगच्छ आगच्छ स्वाहा।'

पंचसु पीठेषु वासक्षेपोऽनेन प्रत्येकं मणौ। ॐ पूर्वेण स्वाहास्थाने नमोऽन्तेन विद्यया([2]विद्यापीठेन)पूर्वमणौ वासक्षेपः १।

ॐ पूर्वया स्वाहास्थाने नमोऽन्तया विद्यया यार्श्व(म्य)मणौ वासक्षेपः २।

ॐ पूर्वेण स्वाहास्थाने नमोऽन्तेन गणिपिटकयक्षराजाधिष्ठतेन पश्चिममणौ वासः ३।

ॐ पूर्वेण स्वाहास्थाने नमोऽन्तेन श्रीदेव्यधिष्ठितेन उत्तरदिग्मणौ वासः ४।

ॐ पूर्वेण स्वाहास्थाने नमोऽन्तेन चतुःषष्टिदेवेन्द्राधिष्ठितेन सोलविद्यादेवतायक्षयक्षिण्यधिष्ठितेन आर्हन्त्यरूपेण मध्यममणौ वासः ५।

कर्पूरवासादिभिरक्षतपूजा। ततो मन्त्रराजस्य '[3]सोहग्गयपरमिट्ठी' क्रमेण स्मरणम्।

अस्मिन् मन्त्रे पञ्च प्रस्थानानि—विद्यापीठं १ विद्या २ उपविद्या ३ मन्त्रपीठः ४ मन्त्रराजः ५।

अस्माकं त्रयोदश नान्दीपदानि—

'ॐ नमो जिणाणं १, ॐ नमो ओहिजिणाणं २, ॐ नमो परमोहिजिणाणं ३, ॐ नमो सव्वोहिजिणाणं ४, ॐ नमो अणंतोहिजिणाणं ५, ॐ नमो अणंताणंतोहिजिणाणं ६. ॐ नमो केवलीणं ७, ॐ नमो भवत्थकेवलीणं ८, ॐ नमो अभवत्थकेवलीणं ९, ॐ नमो उग्गतवचरणकरणधारीणं १०, ॐ नमो चउद्दसपुव्वीणं ११, ॐ नमो दसपुव्वीणं १२, ॐ नमो इगारसअंगीणं १३। एएसिं सव्वेसिं

१ 'भूत रक्ष रक्ष पिशाच रक्ष रक्ष' इत्यपि पाठोऽत्र भवेत्॥ २ तुलना—पृ० ११० पं० ११, पृ० १२५ पं० १८॥ ३ पृ० १०५ पं० १६॥

नमोक्कारं किच्चा, जमिउं विज्जं पउंजामि सा मे विज्जा पसिज्जउ स्वाहा ।।'

इदं विद्यापीठम् ।। १ ।।

'ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स महापण्हसमणस्स सयबलवीरियस्स महाबलस्स जोहपरक्कमस्स सहस्समल्लस्स महाबाहुस्स महाबलविक्कमस्स सिज्झउ मे भगवई महइ महाविज्जा स्वाहा ।।'

बाहु(?)बाहुबलीमहाविद्यापीठं द्वितीयम् ।। २ ।।

'ॐ वग्गु वग्गु निवग्गु निवग्गु सुमणे सोमणसे महुमहुरे स्वाहा ।। ३ ।।'

महाविद्यैव ।

ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा ।। ४ ।।'

'ॐ इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए कालि कालि महाकालि स्वाहा ।। ५ ।।' उपविद्या ।

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिय[ आयरिय ]कालि स्वाहा ।। ६ ।।' मन्त्रपीठः ।

'ॐ ह्रीँ श्रीँ इरिमेरु नमः, ॐ ह्रीँ श्रीँ किरिमेरु नमः, ॐ ह्रीँ श्रीँ गिरिमेरु नमः, ॐ ह्रीँ श्रीँ पी(पि)रिमेरु नमः, ॐ ह्रीँ श्रीँ सिरिमेरु नमः, ॐ ह्रीँ श्रीँ हिरिमेरु नमः, ॐ ह्रीँ श्रीँ आयरियमेरु नमः । [1]पूजायां '[2]स्वाहा ।

मन्त्रराजः स्वाहा[ [2]न्तः ] ।। ७ ।। सप्त मेरवः ।

[3]प्रस्थानपञ्चकेऽपि पूजायां नमः । जापे स्वाहा ।

श्री राजगच्छीयश्रीहंसराजसूरीणां पट्टे श्रीविजयप्रभसूरीणां गुरुक्रमागतः श्रीसूरीणां मन्त्रः । नित्यस्मरण वार २४ ।

---

१ अत्रदं वोध्यम्—

'पूजाकाले नमः जापकाले स्वाहा' [पृ० १०९ पं० २३, पृ० १२४ पं० २] इति प्रसिद्धः प्रतिष्ठितश्च सिद्धान्तः । अत्र तु "पूजायां स्वाहा" इति दृश्यते, पृ० २२४ पं० ११ इत्यत्र च पुनरपि "पूजायां सर्वत्र स्वाहा, नमः जापे" इति वक्ष्यते । ॐ किरिमेरु पिरिमेरु सिरिमेरु स्वाहा । एतान्यक्षराणि शोभनस्थाने लिखित्वा कर्पूरकस्तूरिकाभोगं शतपत्रादिकुसुमैः पूजयेत् ।" [पृ० ९९ पं० १] इति पूजाकालेऽपि 'स्वाहा' शब्दस्योल्लेखः पूर्वं दृष्टः । अतो न ज्ञायते 'किमयं लेखकस्य प्रमाद आहोस्वित् कश्चिदीदृश आम्नायविशेषः' इति । किञ्चान्यत् "प्रस्थानपञ्चकेऽपि पूजायां नमः, जापे स्वाहा" इत्यनुपदमेव [पृ० २२३ पं० १९] अभिधास्यते, तथैव पूर्वमपि [पृ० १०० पं० १९] अभिहितम् । अतोऽत्र सुधीभिर्विभाव्य संगतिः कार्या । २ पृ० ९९ पं० ८ । ३ पृ० १०० पं० १९ ।



'ॐ ह्रीँ श्रीँ इरिमेरु स्वाहा १, ॐ ह्रीँ श्रीँ किरिमेरु स्वाहा, ॐ ह्रीँ श्रीँ गिरिमेरु स्वाहा, ॐ ह्रीं श्रीं पिरिमेरु स्वाहा, ॐ ह्रीँ श्रीँ सिरिमेरु स्वाहा, ॐ ह्रीँ श्रीँ हिरिमेरु स्वाहा, ॐ ह्रीँ श्रीँ आयरियमेरु स्वाहा ।'

अनया रीत्या जापः कार्यः ।

'ॐ ह्रीँ श्रीँ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा ।'

इत्थं स्मरणा ।

ॐ ह्रीँ श्रीँ इरिमेरु नमः, ॐ ह्रीँ श्रीँ किरिमेरु नमः, ॐ ह्रीँ श्रीँ गिरिमेरु नमः, ॐ ह्रीँ श्रीँ पिरिमेरु नमः, ॐ ह्रीँ श्रीँ सिरिमेरु नमः, ॐ ह्रीँ श्रीँ हिरिमेरु नमः, ॐ ह्रीँ श्रीँ आयरियमेरु नमः ।।'

पूजायां सर्वत्र स्वाहा, नमः जापे ।

साध्यविभागः—

'ॐ किरिमेर(रु) स्वाहा। ॐ गिरिमेर(रु) स्वाहा। ॐ पिरिमेर(रु) स्वाहा। ॐ सिरिमेर(रु) स्वाहा। ॐ हिरिमेर(रु) स्वाहा। ॐ आयरियमेरु स्वाहा ।।'

'[1]ॐ आं क्रों ह्रीं श्रीं चक्रपीठस्वामिने नमः। ॐ ह्रीं नमो जिणाणं ॐ जां स्वाहा[१]। ॐ ह्रीँ नमो ओहिजिणाणं ॐ झ्म्ल्व्यूँ स्वाहा २। ॐ ह्रीँ नमो परमोहिजिणाणं प्म्ल्व्यूँ स्वाहा ३। ॐ ह्रीँ नमो अणंतोहिजिणाणं [ ? ] स्वाहा ४। ॐ ह्रीँ नमो सव्वोहिजिणाणं स्म्ल्व्यूँ स्वाहा ५। ॐ ह्रीँ नमो कुट्ठबुद्धीणं ॐ क्म्ल्व्यूँ स्वाहा ६। ॐ ह्रीँ नमो पयाणुसारिणं ट्म्ल्व्यूँ स्वाहा ७। ॐ ह्रीँ नमो संभिन्नसोयाणं ॐ न्म्ल्व्यूँ स्वाहा ८। ॐ ह्रीँ नमो भवत्थकेवलीणं झ्म्ल्व्यूँ स्वाहा ९। ॐ ह्रीं नमो अभवत्थकेवलीणं ॐ ह्म्ल्व्यूँ स्वाहा १०। ॐ ह्रीं नमो उग्गतवचारीणं ॐ व्म्ल्व्यूँ स्वाहा ११। ॐ ह्रीं नमो चउदसपुव्वीणं ॐ च्म्ल्व्यूँ स्वाहा १२। ॐ ह्रीं नमो दसपुव्वीणं ॐ न्म्ल्व्यूँ स्वाहा १३। ॐ ह्रीं नमो इक्कारसअंगीणं ॐ ऐं क्लीं श्रीं स्रूं स्वाहा १४। ॐ ह्रीं नमो सुअकेवलीणं ॐ ह्रीं श्रीं ऐँ ईँ ह्रीं ह्लः स्वाहा १५। ॐ ह्रीं एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा १६।'

१ तुलनार्थं दृश्यतां मन्त्रराजरहस्ये श्लो० ३८०–३८८ [पृ० ४५–४६] पृ० २०३ पं० १६–२२।



ॐ नमो जिणाणं १। नमो ओहिजिणाणं २। नमो परमोहिजिणाणं ३। नमो अणंतोहिजिणाणं ४। नमो कुट्ठबुद्धीणं ५। नमो पयाणुसारीणं ६। नमो संभिन्नसोयाणं ७। नमो सयंबुद्धाणं ८। नमो पत्तेयबुद्धाणं ९। नमो उजुमईणं १०। नमो विउलमईणं ११। नमो महामईणं १२। नमो चउदसपुव्वीणं १३। नमो दसपुव्वीणं १४। नमो इक्कारसंगीणं १५। नमो अट्ठंगमहानिमित्तकुसलाणं १६। नमो विउव्वणइड्ढिपत्ताणं १७। नमो विज्जाहरसमणाणं १८। नमो चारणसमणाणं १९। नमो महुआसवाणं २०। नमो खीरासवाणं २१। नमो आमोसहिपत्ताणं २२। नमो विप्पोसहिपत्ताणं २३। नमो खेलोसहिपत्ताणं २४। नमो जल्लोसहिपत्ताणं २५। नमो सव्वोसहिपत्ताणं २६। नमो मणबलीणं २७। नमो वयबलीणं २८। नमो कायबलीणं २९। नमो खीरासवीणं ३०। नमो सप्पियासवीणं ३१। नमो अम्मियासवीणं ३२। नमो महुआसवीणं ३३। नमो अक्खीणमहाणसलद्धीणं ३४। नमो वद्धमाणलद्धीणं ३५। नमो सव्वसिद्धायणाणं ३६।

ॐ वग्गु वग्गुए फग्गु फग्गुए समणे सोमणसे महुमहुरे इरियाए किरियाए पिरियाए सिरियाए हिरियाए आयरियाए। किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियकालिए। वग्गु वग्गु निवग्गु निवग्गु फग्गु फग्गु समणे सोमणसे जए विजए जयंते अपराजिए स्वाहा। गणधरावल्याम्।[1]

* * *

१ इतः परं हस्तलिखितप्रतेर्द्वितीयतृतीयपत्रयोः प्रायशः शुद्धोऽपि खण्डितो देवतावसरविधिर्विद्यते। किन्तु प्रागत्रैव पृ० १०७–पृ० ११० पं० ११ इत्यत्र मुद्रितेन देवतावसरविधिना समानप्रायत्वात् ततः परं खण्डितत्वाच्च स नात्रास्माभिरुपन्यस्त इति ध्येयम्।







# संक्षिप्तः सूरिमन्त्रविचारः[1]

ॐ नमः श्री गौतमाय ॥ ॐ ह्रीँ नमो जिणाणं। ॐ नमो ओहिजिणाणं। ॐ नमो परमोहिजिणाणं। ॐ नमो अणंतोहिजिणाणं। ॐ नमो अणंताणंतोहिजिणाणं। ॐ नमो केवलीणं। ॐ नमो भवत्थकेवलीणं। [ॐ नमो अभवत्थ केवलीणं]। ॐ नमो उग्गतवचरणधारीणं। ॐ नमो चउद्दसपुव्वीणं। ॐ नमो दसपुव्वीणं। ॐ नमो इक्कारसंगधारीणं। सव्वेसिंपि एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा। जापः १६०००। तथा परमेष्ठिमुद्रया गरुडमुद्रया जापः सहस्र १२ ॥

स्नानां १ गराग २ वसनो ३ ज्ज्वलपुष्पमाला ४
केयूर ५ पुण्ड्र ६ मथ कुण्डलयुग्मकं च ८।
ग्रैवेय ९ मंगदयुगं ११ वरहार १२ मर्क-
संख्यैः पदैर्वपुषि भावय सूरिमन्त्रम् ॥१॥ [मं० र० श्लो० १५२]

अत्र तपःक्रमः। उप १ निवी ५ आंबिल १ निवी ५ आंबिल १ निवी ५ आं० १ निवी १ उप १ एवं तपोदिन २१। अहर्निशं विद्याचिन्तनं विकथावर्जनम्। वस्त्रादेर्लाभः स्यात्।

तथा सहस्र १२००० जापादादेयवचनः स्यात्। ब्रह्मचर्यं सत्यव्रतं च पालनीयम्।

ध्यानविशेषमाह[2]—

सुक्कज्झाणेणेसो कम्मखयकारणो परममंतो
झायव्वो अ तिकालं निच्चं परमिट्ठिमुद्दाए ॥१॥

---

१ अस्य :सम्पादनं लावण्यविजयजी जैनभाण्डागारे [राधनपुर, अखीदोशीनी पोळ] विद्यमानामेकामेव प्रतिम् [डा० नं० २, प्रति नं० १२९२] अवलम्ब्य कृतम्। २ तुलना पृ. १८० पं. १४।



किंसुअसुअमुहवन्नं झाणं धरिउण जवइ जो एअं
विज्जं सो सोहग्गं पावइ सोहग्गमुद्दाए ॥२॥

उत्तत्तकणयवन्नं झाणं धरिउण जोणिमुद्दाए
जो झाइ सूरिविज्जं तस्स वसे तिहुअणं सयलं ॥३॥

सजलजलवाहकालं झाणं धरिउण चक्कमुद्दाए
जो झाइ सूरिविज्जं तस्स खयं जाइ रिउवग्गो ॥४॥

एअंमि मंतंमि छक्कम्मसाहणीओ विज्जाओ भन्नंति। पुव्वं विज्जाविभागं भणिऊण 'एएसिं नमो सिज्झउ' ॥ [ विद्यापीठम् ]

ॐ नमो भगवओ वाहुवलिस्स महावाहुवलिस्स पण्हसमणस्स महापण्हसमणस्स सिज्झउ मे भगवई महइ महाविज्जा ॥१०८॥

ॐ वग्गु वग्गु निवग्गु सुमणे सोमणसे महुमहुरे स्वाहा ॥२॥

अत्र तपः। उप १ निवी १ आंविल ३ निवी ४ आंविल १ निवी २ उप १ एवं दिन १३। पूर्वरीत्या विशेषकायोत्सर्गे लोगस्स उ० ४०। अथवा सकलमन्त्रस्य १०८, चिन्तितलाभः। इति महाविद्या ॥

ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा। सारस्वतार्थे १००८। स्वप्नार्थे १०८। आदेयवाक्यतार्थे १०८। ऋद्धिः वृद्धिः शिष्यलब्धिश्च १२०००। उपवास १ नीवी ८ आंविल ५ नीवी ७ आंविल १ नीवी २ उपवास १ एवं दिन २५ ॥३॥

ॐ इरिआए किरिआए गिरिआए पिरिआए सिरिआए हिरिआए आयरिआए कालिकालि महाकालि स्वाहा ॥४॥ उपविद्या।

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिअकालि स्वाहा। मन्त्रपीठमेतत्।

उप १ निवी ५ आंविल १ उप १ एवं तपोदिन ८। प्रातर्गण्डूष ७ त्यागपूर्वं पश्चान्निजपादद्वयाधोन्यस्तशत्रुमुखनिधानम् अङ्गुष्ठमुद्रा अङ्गुष्ठात् वैपरीत्येन गुणनं



त्रिकालम्, एकैकमुखस्तम्भः। तथा काष्ठे येन धृतस्तस्य जातिपितृमातृनात्रकं तस्य च नाम लिखित्वा वामपादाधः कृत्वा वामजंघोपरि दक्षिणपादन्यासं कृत्वा मुष्टि[1] ० ० [हृ]दये धृत्वा जापस्त्रिसन्ध्यम्। बन्धमोक्षः॥

ॐ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा॥१॥ पाठांतरे 'ॐ ह्रीँ श्रीँ अर्हँ आयरियमेरु सर्वार्थसिद्धिं कुरु कुरु स्वाहा॥' मन्त्रराजः। अस्याधिष्ठायकः सौधर्मेन्द्रः।

अत्र मन्त्रे आंबिल १६ स्त्रीमुखमपश्यन् पञ्चमौनी समदर्शी कर्पूरादिना यन्त्रं प्रपूज्य परमेष्ठिमुद्राप्रवचनमुद्राभ्यां शुक्लध्यानेन लक्षध्यातः सर्वप्रियः। तथा यथावर्णध्यानात् त्रिसन्ध्यं ध्यातः षट् कर्माणि कुरुते। तथास्य सकलमन्त्रस्य लक्ष ३ जापात् निरीहतया लक्षं वा गौतम इवाभासते।

मेरुसद्देण अरिहंतत्तणं वुच्चइ। अरिहंतत्तणेण अरिहंता। जहा चक्केण चक्की, रज्जेण राया। अर्हन्तः षोडशांशाः। गणभृतः १३। भवाभवस्थकेवलिणो(नो)ऽपि। ओहि-परमोहि-सव्वोहि-णंताणंतोहिजिना ११। ऋजुमत्यादयः १०। चउदसदसपुव्विणो अट्ठंसा। तेण एएसु तिकालविसयनाणं पवत्तइ। अरिहंतत्तणं मुक्खतरुभूअं। अरहंता अंकुरा। सेसा साहप्पसाहठाणीआ। अतः कारणात् मेरुरूपे मन्त्रराजे स्मर्यमाणे जिनप्रभा भवति। जिनेन्द्रस्य परिवारो गणधरादयः। दोषनिग्रह इति दोषा अष्टादशाऽज्ञानादयः। मेरुरित्यक्षरस्यानेकधा व्याख्या। दिग्मात्रमिदम्। तत्त्वं तत्त्वविदो जानन्ति। अर्हन् स्तुत्यगुणसम्पूर्णो भगवान्, तेन स्तुतिपदानि भगवतामृद्धिस्थानीयानि उक्तानि। इरि किरि सिरि हिरि इति विद्यादेवता वीतरागगुणाश्रिता नामसादृश्यमन्त्ररूपाः पृथक्कर्मसम्पादकाः। तेनैकोनविंशत्यतिशयप्रातिहार्यस्थानीयाः। विद्यापदानि वग्गु वग्गु इत्यादि पञ्चदशसंख्यानि वीतरागस्तुतिरूपाणि। तेषां विद्याप्रवादपूर्वादर्थो[2] ज्ञेयः।

यथा वीतरागस्य त्रिभुवनप्रभुत्वं भवति तथा वीतरागविद्येयं त्रिभुवनवश्यादिषट्कर्मकारिणी। मोक्षकारिणीति। एवं ज्ञात्वा सर्वस्तुतिपदप्रारम्भे

१ 'मुष्टिद्वये' इत्यपि पाठश्चिन्त्यः॥ २ तुलना पृ० १८२ पं. ५॥



विद्याविभागप्रारम्भे च ॐ इति सर्वलोकस्यात्मनश्च शान्तिपुष्टिऋद्धिवृद्धिस्फूर्तिशिवायोच्चारणीयः । ह्रीँ वश्यार्थे । श्रीँ धनार्थे । युगपन्नोच्चारणीयानि । इति सबीजं ध्यानं । एभिर्विना निर्बीजं स्यात् । तत् केवलं मोक्षाय ।

साधनविधिरुच्यते—अभये सुभिक्षे तीर्थक्षेत्रे उत्तराभिमुखमन्दिरे निःशल्ये समेऽतिस्तोकजनेऽविकृतिकः सहस्रपत्रकमले श्रीगौतममालिख्य आं क्रौँ (क्रोँ) ह्रीँ श्रीँ अनेनाहूयात्मरक्षापूर्वं करजापो लक्षमानः कार्यः । ब्रह्मव्रतं त्रिधा शुद्धं विधाय ( विधेयम् । ) जिनवन्दनं विनाऽन्यत् पाठादिकं कर्म नो विधेयं । वर्धमानजिनजन्म–ज्ञानकल्याणदिने चन्द्रप्रभ–वृषभयोरथवा । अन्येषां नहि । अथवा सुभोजनः सुमाल्यः सुविलेपनः सुवस्त्रः पुष्पितफलितोद्याने कृष्णागुरुकर्पूरादिना पूजां विधाय द्वात्रिंशत्सहस्रपुष्पजापो विधेयः । पद्मासनं विनाऽन्यासनेषु नोपवेष्टव्यम् । ततः सिद्धो भवति । साधना द्विप्रकारैव । अन्यः प्रकारो नास्ति ।

सर्वपदसंख्या ४९ । तत्र प्रथमद्वादशके द्वादशसु पदेषु प्रत्येकमक्षराणि यथा । ५ । ७ । ९ । ९ । ११ । ६ । ९ । १० । १२ । ९ । ७ । ११ । एवं सर्वाक्षरसंख्या १०५ ।

द्वितीयद्वादशसु पदेषु प्रस्थापना । ३ । ३ । ४ । २ । ३ । २ । ४ । १ । १ । २ । ४ । एवं सर्वाक्षरसंख्या २९ ।

तृतीयद्वादशकपदस्थापना । ७ । ५ । ६ । ५ । ६ । ३ । ४ । ५ । ४ । ४ । ४ । ४ । एवं सर्वाक्षरसंख्या ५७ ।

चतुर्थद्वादशकपदस्थापना । ४ । ४ । ७ । ६ । ६ । ६ । ६ । ४ । ४ । ४ । ४ । ६ । एवं सर्वाक्षरसंख्या ६१ ।

एकस्मिन् पदे अक्षर २ । एवं सर्वपदेषु सर्वाक्षरसंख्या २५२ । श्लोक ७ अक्षर २८ ।

---

१ तुलना–पृ० १८५ पं० ११ । २ तुलना–पृ० १८६ पं० २१ ।



गौतमस्याक्षराणां प्रमाणम् २१०० । श्लोकप्रमाणम् ३२ । कालदोपात् हीयमानो जातः । दुष्पसहसूरिरहुट्टश्लोकान् पठिष्यति । नांदीपद ५। अक्षर ११२ ॥

अथ गौतमवाचनायां मेरवः ११

श्रुतकेवलिवाचनायां १०

वज्रवाचनायां ९

नागेन्द्रादिवाचनायां ९।८।७।६।५।

नवाष्टसंख्या व्युच्छिन्ना। पट् सप्त पञ्च प्रवर्तिष्यन्ते।

चन्द्रवाचनायां सप्त पञ्च च।

विद्याधरवाचनायां पट्

नागेन्द्रवाचनायां सप्त

क्रमेण हीयमाने दुष्पसहसूरेर्मेरुत्रयम् ॥ श्रीः ॥





अज्ञातकर्तृकः

# सूरिमन्त्रसंग्रहः[1]

## अथ सूरिमन्त्रो लिख्यते

नमो जिणाणं १, नमो ओहिजिणाणं २, नमो परमोहिजिणाणं ३, नमो अणंतोहिजिणाणं ४, नमो अणंताणंतोहिजिणाणं ५, नमो सामण्णकेवलीणं ६, नमो भवत्थकेवलीणं ७, नमो अभवत्थकेवलीणं ८, नमो उग्गतवचरणचारीणं ९, नमो चउद्दसपुव्वीणं १०, नमो दसपुव्वीणं ११, नमो एक्कारसंगीणं १२। पद १२, अक्षर १०५।

सव्वेसिं एएसिं नमोक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा। पद १२, अक्षर २९, एवं पद २४, अक्षर १३४। प्रथमं विद्यापीठम्। एतस्याधिष्ठात्री सरस्वतीदेवी श्रीगौतमं नमति १।

ॐ नमो भगवओ वाहुवलिस्स पण्हसमणस्स ॐ वग्गु वग्गु निवग्गु सुमणे सोमणसे महु महुरे। पद ८, अक्षर ३८। द्वितीयं महाविद्यापीठम्। एतस्याधिष्ठात्री त्रिभुवनस्वामिनी देवी मानुषोत्तरमहागिरीन्द्रवासिनी २।

इरिकालि पिरिकालि सिरिकालि महाकालि किरियाए हिरियाए। पद ६, अक्षर २४। तृतीयं उपविद्यापीठम्। एतदधिष्ठात्री पद्मह्रदवासिनी श्रीदेवता ३।

ॐ किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिय आयरियकालि। पद ५, अक्षर ३५। चतुर्थं मन्त्रपीठम्। एतत्स्वामी गणिपिटकयक्षराजः ४।

---

१ अस्य सम्पादनं लालभाई दलपतभाई भारतीयसंस्कृतिविद्यामन्दिरे [अमदावाद] विद्यमानामेकामेव प्रतिमवलम्ब्य विहितम्।



किरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा। पद ६, अक्षर २४। पञ्चमं मन्त्रराजप्रस्थानम्। एतदधिष्ठातारः सर्वेन्द्राः। सर्वमन्त्रे पद ४९, श्लोक ७, अक्षर ३१।

रागाइरिउजईणं जए जिणाणं नमो मई होउ।
एवं ओहिजिणाणं परमोहीणं तहा तेसिं ॥१॥

एवमणंतोहीणं अणंताणंतोहिजुयजिणाण नमो।
सामण्णकेवलीणं भवाभवत्थाण तेसि नमो ॥२॥

उग्गतवचरणचारीणमेवमित्तो नमो नमो होइ।
चउदसदसपुव्वीणं नमो तहेक्कारसंगीणं ॥३॥

पणवो नमो भगवओ बाहुबलिस्सेह पण्हसमणस्स।
ॐ वग्गु वग्गु निवग्गुमग्गंगयस्स तहा ॥४॥

सुमणे सोमणसे चिय महुमहुरे जिणवरे नमंसामि।
इरिकाली पिरिकाली सिरिकाली तह महाकाली ॥५॥

किरियाए हिरियाए संगए तिविहकालियं विरए।
सुहमाहप्पं सुत्तिं साहंते साहुणो वंदे ॥६॥

ॐ किरिकिरिकालिं पिरिपिरिकालिं च सिरिसिरिकालिं।
हिरिहिरिकालिं दुविहं साहंते आयरियकालिं ॥७॥

किरिमेरुं पिरिमेरुं सिरिमेरुं तहय होइ हिरिमेरुं।
आयरियमेरुपयमवि साहंते सूरिणो वंदे ॥८॥

पद्मस्थानमकारं केचिद्वदन्ति। स चैवम्—लब्धिपद १६, सा मे विज्जा पसीयउ स्वाहान्तं प्रथमपीठम्, अक्षर १८३। महुमहुरे स्वाहान्तं द्वितीयपीठम्, अक्षर ३६। इरिकालि किरिकालि पिरिकालि हिरिकालि स्वाहा, तृतीयं पीठम्, अक्षर १८। इरियाए किरियाए सिरियाए हिरियाए कालि महाकालि स्वाहा,



षड्भिः पदैश्चतुर्थं पीठम् , अक्षर २४ । ॐ इरिइरिकालि किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियआयरियकालि स्वाहा, पद ६, अक्षर ४३, पञ्चमं पीठम् । ॐ किरिमेरु ॐ पिरिमेरु ॐ सिरिमेरु ॐ हिरिमेरु ॐ आयरियमेरु स्वाहा, पद ५, अक्षर २९, षष्ठं पीठम् । सर्वाक्षर ३३३, श्लोक १०, अक्षर १३ ।

अथ पञ्चदेवाद्रिवाचनायामेव विशेषः कोऽपि लिख्यते–

पणवो नमो जिणाणं १ ओहिजिणे २ तहय परमओहिजिणे ३ ।
तहणंतोहिजिणाणं ४ केवलिति ७ चरमसरीराणं ८ ॥१॥
उग्गतवचरणचारीण ९ चउदसपुव्वी १० तहेव दसपुव्वी ११ ।
एक्कारसअंगीणं १२ एएसिं पभिइ पुव्वं वा(व) ॥२॥

इति विद्यापीठम् ।

पणवो नमो भगवओ बाहु०[वलिस्सेह पण्हसमणस्स ।]
ॐ वग्गु वग्गु दुनिवग्गु सुमण इच्चेय सोमणसे ॥३॥
महुमहुरे इरिकाली किरिकाली पिरियकाली सिरिकाली ।
हिरिकाली आयरियकालो सोलससहस्स सोहग्गं ॥४॥

इति द्वितीयं पीठम् ।

इरियाए किरियाए पिरियाए सिरियाए तहय हिरियाए
उवविज्जाए बारससहस्स रत्तीए आएसो ॥५॥

तृतीयम् ।

पणवो इरि इरि किरि किरि पिरि पिरि सिरि सिरि हिरि हिरिय आयरिय ।
आयरियकालि पइपय दससहस मासि वेरिखओ ॥६॥

चतुर्थम् ।

पणवाइं पंचमेरु पुव्विं च सहस्स बारस य जावो
इच्चेकग्गमणो जइ सूरी सो गोयमसुहम्मो[1] ॥७॥

पञ्चमम् ।

१ अत्र '°सहम्मो' इत्यपि पाठः समीचीनः स्यादिति भाति । तथा च गौतमसधर्मो गौतमतुल्य इत्यर्थो भवेत् ॥





श्लोक ५, अक्षर ११। अत्र च 'केवलिति' केवलित्रिकम्, यथा सामण्णकेवलीणं १ भवत्थकेवलीणं १ अभवत्थकेवलीणं १। तथा 'बाहुबलिस्स पण्हसमणस्स' इति बिन्दुसङ्केतः।

पुनर्वाचनाभेदो यथा—ॐ नमो जिणाणं १ नमो ओहिजिणाणं २ नमो परमोहिजिणाणं ३ नमो सव्वोहिजिणाणं ४ नमो अणंतोहिजिणाणं ५ नमो अणंताणंतोहिजिणाणं ६ नमो सामन्नकेवलीणं ७ नमो भवत्थकेवलीणं ८ नमो अभवत्थकेवलीणं ९ नमो उग्गतवचरणधारीणं १० नमो चउद्दसपुव्वीणं ११ नमो दसपुव्वीणं १२ नमो इक्कारसंगीणं १३ सव्वेसिं एएसिं नमोक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा। पद २६, अक्षर १४५। प्रथमं प्रस्थानम्।

ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स ॐ वग्गु २ निवग्गु २ सुमणे सोमणसे महु महुरे ॐ इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए स्वाहा। पद २६, अक्षर ७२। द्वितीयं प्रस्थानम्।

ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि महाकालि स्वाहा। पद ९, अक्षर ३७। तृतीयं प्रस्थानम्।

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिय आयरियकालि स्वाहा पद ८, अक्षर ४५।
मन्त्रपीठं चतुर्थम्।

ॐ ह्रीँ श्रीँ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा। पद ९, अक्षर ३५। एवं सर्वपद ६८, अक्षर ३३४, श्लोक १०, अक्षर १४।

ॐ ह्रीँ श्रीँ अर्हँ आयरियमेरु मम सर्वसिद्धिं कुरु कुरु स्वाहा। 'श्रीविद्यानरेन्द्रः,[1] स्मरणेन नरेन्द्राः प्रणमन्ति, अप्रतिहतं सौभाग्यं स्यात्, श्रीरुल्लसति, प्रतिभा प्रवर्धते, महिमा दीप्यते।[2]

*　　　*　　　*

१ (श्रीविद्यानरेन्द्रस्मरणेन ?)॥ २ 'इति सूरिमंत्र ५ प्रस्थानं लि० रत्नचंद्रेण श्रेयं।' ईदृशः पाठः प्रतिसमाप्तौ विद्यते॥





# श्रीमानदेवसूरिकृतः

## सूरिमन्त्रस्तवः*

रागाइरिऊजईणं नमो जिणाणं जए महंताणं ।
एवं ओहिजिणाणं परमोहीणं तहा तेसिं ॥१॥
एवमणंतोहीणं णंताणंतोहियजिजुणाण नमो ।
सामन्नकेवलीणं भवाभवत्थाण तेसि तहा ॥२॥
उग्गतवचरणचारीणमेवं भिन्नो नमो नमो होइ ।
चउदस-दसपुव्वीणं नमो तहेगारसंगीणं ॥३॥
एएसिं सव्वेसिं एवं काउं अहं नमोक्कारं ।
जमियं विज्जं पउंजे सा मे विज्जा पसिज्झिज्जा ॥४॥
निच्चं नमो भगवओ वाहुवलिस्सेह पण्हसमणस्स ।
ॐ वग्गुं वंग्गुं तह निवग्गुमग्गंगयस्स तहा ॥५॥
सुमणे विय सोमणसे महुमहुरे जिणवरे नमंसामि !
इरिकाली पिरिकाली सिरिकाली तह महाकाली ॥६॥

---

*मानदेवसूरिविरचितोऽयं सूरिमन्त्रस्तवो विविधेषु सूरिमन्त्रकल्पेषूद्धृतः समुपलभ्यते । तत्र च नानाविधप्रत्यनुसारेण नानाविधाः पाठभेदा उपलभ्यन्ते । अस्माभिस्तु अज्ञातसूरिकृते सूरिमन्त्रकल्पे [पृ० १८५–१८६ इत्यत्र] उद्धृतस्यास्य सूरिमन्त्रस्तवस्य सम्पादने उपयोजितां जैनसाहित्यविकासमण्डलसत्कां प्रतिं मुख्यतया अवलम्ब्य सूरिमन्त्रस्तवोऽत्र सम्पादितः । पाठान्तरप्रदर्शनावसरे सा प्रतिरत्र J. इति संकेतिता । सिंहतिलकसूरिभिरपि मन्त्रराजरहस्ये पृथक् पृथक् स्थानेषु [पृ० १७–२०] अस्य स्तवस्य नव गाथाः समुद्धृताः तदनुसारेण तु यानि पाठान्तराणि तान्यत्र M. इति संकेतेन दर्शितानि । अधिकनानाविधपाठभेदजिज्ञासुभिस्तु अज्ञातसूरिकृते सूरिमन्त्रकल्पे [पृ० १८५–१८६ इत्यत्र] अज्ञातकर्तृके सूरिमन्त्रसङ्ग्रहे च [पृ० २३२] यत्रायं स्तव उद्धृतस्तत्र विलोकनीयम् ।

१ नमो जिणाणं नमो महं होउ J. । 'नमो जिणाणं जए महंताणं' इति वा पाठः–टि० **J.** । जए जिणाणं नमो महं होइ M. । २ अणंता० M. । ३ तेसि नमो M. । ४ °मेवमित्तो M. । ५ तहिक्कार° M. । ६ एवं विहिया M. । ७ जमिउं J. । ८ पसिज्झउ M. । ९ पणवो M. । १० ॐ वग्गुं वग्गुं निवग्गुमग्गंगयस्स तहा J. । ११ सुमणे सोमणसे विय M. ।

किरियाए [1]हिरियाए संगए तिविहकालियं विरए ।
[2]सुहसाहयमुत्तिं पि य साहिंते साहुणो वंदे ॥७॥

ॐ किरिकिरिकालिं पिरिपिरिकालिं च [3]सिरिसिरि सकालिं ।
[4]हिरिहिरिकालिपयं पि य सरिय सरिय आयरिय कालिं ॥८॥

किरिमेरुं पिरिमेरुं सिरिमेरुं तहय होइ हिरिमेरुं ।
आयरियमेरुपयमवि [5]साहंते सूरिणो वंदे ॥९॥

इअ मंतपयसमेया थुणिया सिरिमाणदेवसूरिहिं ।
जिणसूरिसाहु सययं दिंतु थुणंताण सिद्धिसुहं ॥१०॥



१ हिरियाए य संगए M. । २ सुहमाहप्पं मुत्ति साहिंते M. । ३ सिरिसिरिकालिं M. । ४ हिरिहिरिकालिं दुविहं साहिंते आयरियकालिं ['आयरिय आयरियकालिं'— प्रत्यन्तरे] M । ५ साहिंते M. ।





श्रीमानदेवसूरिकृता

## सूरिमन्त्राधिष्ठायकस्तुतिः[1]।

पढमपए सुनिविट्ठा विज्जाए सूरिणो गुणनिहिस्स ।
गोयमपयभत्तिजुया सरस्सइ मह सुहं देउ ॥१॥
दुइयपीढे निविट्ठा इमाइ विज्जाइ निरुवममहप्पा ।
तिहुयणसामिणिनामा सहस्सभुयसंजुया संता ॥२॥
सिरिगोयमपयकमलं झायंती माणुसुत्तरनगस्स ।
सिहरंमि ठिया निच्चं संघस्स य मह सुहं देउ ॥३॥[2]
पउमदहसंनिविट्ठा चउसट्ठिसुराहिवाण मणमहणी ।
सव्वंगभूसणधरा पणमंती गोयममुणिंदं ॥४॥
विजया–जया–जयंती–नंदा-भद्दासमन्निया तईए ।
विज्जापए निविट्ठा सिरिसिरिदेवी सुहं देउ ॥५॥
सोलससहस्स(स)जक्खाण सामिओ अतुलियवलो य वीसभुओ ।
जिणसासणपडिणीयं मह रिउवग्गं निवारेउ ॥६॥
सोहम्मकप्पवासी एरावणवाहणो य वज्जकरो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥७॥
ईसाणकप्पवासी सूलकरो वसहसंठिओ निच्चं ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥८॥

---

१ मानदेवसूरिकृतेयं सूरिमन्त्राधिष्ठायकस्तुतिः केषुचित् सूरिमन्त्रकल्पेषूद्धृतोपलभ्यते । तत्र च नानाविधप्रतिषु पाठभेदा दृश्यन्ते । तज्जिज्ञासुभिर्जिनप्रभसूरिकृते सूरिमन्त्रबृहत्कल्पविवरणे [पृ० १०४–१०५] मेरुतुङ्गसूरिकृते सूरिमुख्यमन्त्रकल्पे [पृ० १६३—१६६] अज्ञातसूरिकृते सूरिमन्त्रकल्पे [पृ० १९२—१९४] इत्यादौ द्रष्टव्यम् । अस्माभिस्तु तान् विविधान् पाठभेदानवलोक्य सम्पादितेयं स्तुतिः ।

मेरुतुङ्गसूरिकृतसूरिमुख्यमन्त्रकल्पमुद्रणात् परं दृष्टायां श्रीविजयनन्दनसूरिमहाराजसत्कायां प्रतौ दृष्टौ केवलौ द्वौ पाठभेदावत्र N इति संकेतेन दर्शितौ ॥ २ मह संघस्स य सुहं देउ N.



तइयकप्पनिवासी सिरिसुमणो नामओ य चक्ककरो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥९॥
सिरिबंभलोयवासी सोमणसो नामओ य बहुसत्थो ।
सेवइ तियसाहिवई सगोयमं मन्तवररायं ॥१०॥
अट्ठकुलनागराओ सहसफडो सिरनिविट्ठकरमुउलो ।
सेवइ तियसाहिवई सगोयमं मंतवररायं ॥११॥
रोहिणीपमुहा देवी चउसट्ठिसुराहिवा तहा अन्ने ।
सेवइ गोयमचलणे जक्खा जक्खिणि चउव्वीसं ॥१२॥
कणयमयसहसपत्ते कमलंमि य संठिओ य लद्धिजुओ ।
बहुपाडिहेरकलिओ झायव्वो गोयममुणिंदो ॥१३॥
'आँ क्रोँ ह्रीँ श्रीँ'
एएणं मंतेणं झाणारंभे ठविज्जए निच्चं ।
अंजलिमुद्दाकरणे संनिहियसुराण समवाओ ॥१४॥
संनिहियसुरवराणं उस्सग्गो कीरए सुपूया य ।
कप्पूरधूववासेहिं सव्वहा विहियवंभवओ ॥१५॥
थोवजलविहियन्हाणो वरवत्थविभूसिओ य तिकालं ।
कम्मक्खयहेउं जो सुमरइ विज्जं इमं लक्खं ॥१६॥
'ॐ इरिकिरिगिरिपिरिसिरिहिरि आयरिय' एयस्स मंतरायस्स ।
जावं तिलक्खमाणं करेइ सो गोयमो होइ ॥१७॥
सोहग्ग य परमिट्ठी पवयण सुरही कयंजली झाणे ।
मुद्दापंचगमेयं कायव्वं सव्वकालं पि ॥१८॥
किं चिंतामणि कामधेणु कप्पद्दम सुंदर ।
नवनिहि चउदस रयणपवर चक्कितण मणहर ॥
जासु वयणि सिरिसूरिविज्ज गोयम सुपइट्ठिय ।
भुवणत्तयअक्खलियमहप्प निट्ठियकम्मट्ठय ॥१९॥

* * *

1 जक्खा जक्खी य चउव्वीसं N. ।





पूर्णचन्द्रसूरिविरचितं

# सूरिविद्याध्यानफलादिव्यावर्णकं स्तोत्रम्[1]

उत्तत्तकणयवन्नं झाणं धरिऊण सुहगमुद्दाए ।
जो झाइ सूरिविज्जं तस्स वसे तिहुअणं सयलं ॥ १ ॥

[2]सजलजलवाहकालं झाणं धरिऊण चक्कमुद्दाए ।
[3]जो झाइ सूरिविज्जं तस्स खयं जाइ रिउवग्गो ॥ २ ॥

[4]जिण–ओहिअ–परमोहिअ–णंतोहिअ–णंतणंतओहिजिणा (णे) ।
केवलि–भवत्थकेवलि–अभवत्थिअकेवलीणं च ॥ ३ ॥

उज्जुमई–विउलमई–वेउव्वियलद्धी–सव्वलद्धीणं ।
पण्हासमणाय(ण) य तहा जंघाचारणमुणीणं च ॥ ४ ॥

विज्जासिद्धाणं तह आगसगामीण तह य निच्चंपि ।
वयणविस– तत्तलेसाण पणमिमो सीअलेसाणं ॥ ५ ॥

चउदस–दसपुव्वीणं इक्कारसअंग[सुत्त?]धारीणं ।
तहय दुयालसअंगीणं उग्गतवचरणचारीणं ॥ ६ ॥

---

१ इदमत्र ध्येयम्–वस्तुत इदं स्तोत्रमपूर्णं खण्डितं चेति भाति । अस्य काश्चन गाथा अपि पूर्वापरसम्बन्धरहिता मध्ये खण्डिताश्चेति भाति । तथापि पं० अम्बालालसम्पादिते मन्त्रराजरहस्ये परिशिष्टरूपेण मुद्रितमिदं स्तोत्रं दृष्ट्वा तदनुसारेण यथावदेवात्र मुद्रितमस्माभिः ।

अस्य काश्चन गाथाः सूरिमन्त्रकल्पेषु क्वचित् दृश्यन्ते । तच्चास्माभिरत्र टिप्पणीषु दर्शितम् । अतस्तासु गाथासु ये केचन पाठभेदास्ते तज्जिज्ञासुभिस्तत्र विलोकनीयाः ।

२ दृश्यतां पृ० १८० पं० १९ ।

३ दृश्यतां पृ० १८१ पं० १ ।

४ एतदादिकं गाथाचतुष्टयं मन्त्रराजरहस्ये [ पृ० ३८ ] पूर्णचन्द्रसूर्यभिमतस्य एकत्रिंशल्लब्धिपदयुक्तस्य सूरिमन्त्रप्रथमप्रस्थानस्योपन्यासे सिंहतिलकसूरिभिरुपन्यस्तम्, नवरं 'विज्जासिद्धाण........' इति पङ्क्तेरनन्तरं पङ्क्तिद्वयं तत्राधिकमस्तीति ध्येयम् ।





सव्वेसिं पि जिणाणं एएसि पयाण छट्ठिबहुवयणं ।
आइम्मि नमोसद्दो ॐ ह्रीँ सद्दि (हि) ओ य पढमपए ॥ ७ ॥

[1]सुक्कज्झाणेणेसो कम्मक्खयकारणो परममंतो ।
झायव्वो अ तिक्कालं निच्चं परमिट्ठिमुद्दाए ॥ ८ ॥

[2]खीरासव–महुआसव–अमियासवलद्धिआण पत्तेयं ।
अक्खीणमहाणसलद्धियाण संभिन्नसोयाणं ॥ ९ ॥

[3]तत्तो पयाणुसारिअलद्धीणं तहय बीयबुद्धीणं ।
तत्तो अ कुट्ठबुद्धीण सव्वपया ॐ नमो आसी ॥ १० ॥

एएसिं नमोक्कारं किच्चा इच्चाइ जाप(व) ओ स्वाहा ।
सोहग्गकरी विज्जा नायव्वा गुरुपसाएणं ॥ ११ ॥

किंसुअसुअमुहवन्नं झाणं धरिऊण जोणिमुद्दाए ।
विज्जं सो सोहग्गं पावइ जुवईण जोगं च ॥ १२ ॥

[4]उत्तत्तकणयवन्नं० ॥ १३ ॥ [१]

सजलजलवाहवन्नं० ॥ १४ ॥ [२]

इअ एए उवएसा सव्वे नाऊण झाइ जो सूरी ।
सो पुन्नचंदसूरीण संमयं लहइ सिवसुक्खं ॥ १५ ॥

इति विद्यागर्भितं लब्धिस्तोत्रं समाप्तम् ॥

---

१ दृश्यतां पृ० १८० पं० १५। २ दृश्यतां पृ० ३९ पं० ५। ३ तुलना पृ० ३९ पं० ७। ४ दृश्यतां पृ० १८० पं.० १७। ५ पूर्ववदियं गाथा ज्ञेया।





मेरुतुङ्गसूरिसमुद्धृतः

# सूरिमन्त्रसाधनविधिफलादिव्यावर्णनपरः कल्पः

शुचिर्भूत्वाऽल्पनीरेण त्रिसन्ध्यं यः स्मरेदमुम्
श्वेतध्यानसुगन्धाढ्यस्तस्य सिध्यति वाञ्छितम् ॥ १ ॥
रोहिणीप्रमुखा देव्यो मन्त्रराजप्रभावतः ।
प्रतिष्ठां तस्य कुर्वन्ति भूरिकल्याणसम्पदः ॥ २ ॥
सौभाग्यमापदां नाशो राजपूज्यः श्रियां पतिः ।
दीर्घायुरिह लोके स्यात् सुगतिश्च भवान्तरे ॥ ३ ॥
चतुर्दश्यामथाष्टम्यामुपवासी जपेद् गुरुः ।
अष्टोत्तरसहस्रं यः स भवेद् महिमास्पदं ॥ ४ ॥
श्रीपतिर्नृपसन्मानपात्रं च यशसां पदम् ।
अजेयः शत्रुभिः स स्यान्निर्विघ्नो दोषवर्जितः ॥ ५ ॥
अष्टोत्तरसहस्रं वा जपित्वाष्टोत्तरं शतं ।
गुग्गुलाज्यगुटीः शान्तिहेतवे जुहुयात् कृती ॥ ६ ॥
सौभाग्ये महिमार्थे च सर्वविश्वविमोहने ।
षट्कर्मस्वपि संध्यासु जपितो वाञ्छितप्रदः ॥ ७ ॥
सकलं मूलमन्त्रं वा प्रत्यब्दं दीपपर्वणि ।
उपवासी जपेन्मन्त्रसहस्रमष्टभिर्युतम् ॥ ८ ॥
क्षीरान्नभोजनं प्रातः कुरुते यस्तु पारणम् ।
तद्वर्षं तस्य सन्मानलाभकामितदायकम् ॥ ९ ॥
प्रतिवर्षं सर्वमन्त्रं सहस्रमष्टभिर्युतम् ।
शतपत्रैः सिताब्जैर्वा जपेद्वाञ्छितहेतवे ॥ १० ॥
तद्दिनेऽक्षस्नात्रदुग्धं निपीतं भोगपूर्वकम् ।
सनालिकेरनैवेद्यताम्बूलं पुत्रदं स्त्रियाः ॥ ११ ॥



मेरुमन्त्रं समालिख्य सुरभिद्रव्यसञ्चयैः ।
शुभेऽह्नि विधिना रक्षा कृता स्याद् विघ्नहारिणी ॥ १२ ॥
अपत्यजननी जीवद्वत्सदा शल्यभञ्जनी ।
भ्रष्टराज्यपदोद्धर्त्री रोगमारिनिवारिणी ॥ १३ ॥
रणे जयकरी शस्त्रसार्थघातनिवारिणी ।
रुष्टप्रसादिनी वाढं स्तम्भिनी वह्निनागयोः ॥ १४ ॥
शाकिनी–डाकिनी–भूत–प्रेत–मुद्गलदोषभित् ।
वारि–वैर–विष–व्याल–भूप–तस्करभीतिहृत् ॥ १५ ॥
स्वचक्रपरचक्राब्धिकुग्रहातङ्कवारकः ।
वधबन्धनिरोधादिसर्वसाध्वसभेदकः ॥ १६ ॥
तुष्टिपुष्टिकरः प्रौढप्रसादमहिमास्पदं ।
मेरुमन्त्रोऽस्य माहात्म्यं वक्तुं शक्रोऽपि न क्षमः ॥ १७ ॥
एकं त्रीन् पञ्च वा सप्त युक्त्या लक्षाणि यो जपेत् ।
सर्वमन्त्रममुं तस्य महासिद्धिः प्रजायते ॥ १८ ॥
षट्कर्माद्यैहिकार्थानां कर्तृत्वे ननु का स्तुतिः ? ।
सूरिमन्त्रः स्मृतो युक्त्या स्वर्गमोक्षप्रदोऽप्यसौ ॥ १९ ॥
भानुप्रमितसहस्रैः कुसुमैर्जपितः पुनः ।
सर्वसिद्धिविधौ सूरेर्मन्त्रराजो विजृम्भते ॥ २० ॥

तत्त्वमिदम्—

मेरुमन्त्रकृत रक्षा विधिना शीलशालिना ।
अलुब्धेन श्रीगुरुणा सर्वकर्मसु जृम्भते ॥ २१ ॥
अनिष्टारिष्टनाशाय दुष्टकुष्टादिभित्तये ।
विश्वेप्सितकरो मेरुः षण्मासावधिजापतः ॥ २२ ॥
आदेशं सूरये दत्ते शुभं वाप्यऽशुभं पुनः ।
चिन्तारत्नप्रभः सप्तमेरुमन्त्रो जिनैः स्मृतः ॥ २३ ॥



अथ शेषपीठफलानि——

अष्टम्यां वा चतुर्दश्यां महाविद्योपवासतः ।
स्मृता सहस्रमष्टाग्रमादेशायेप्सिताप्तये ॥ २४ ॥

एवं ८।१४ दिने ।

अष्टोत्तरसहस्रं यो जातीपुष्पैः सुगन्धिभिः ।
जपेत् सौभाग्यविद्यां स्यात् सौभाग्यं तस्य सर्वदा ॥ २५ ॥
षोडशसहस्रजापादेवं युक्त्योपविद्यया ।
सिद्धिः सारस्वतस्य स्यादादेशश्च प्रजायते ॥ २६ ॥

पर्वतमुद्रया किंशूकध्यानाज्जगद्वश्यमपि। वाहुवलिविद्या तु सौभाग्यमूद्रया १६ सहस्रजापात् ज्ञानाय स्वप्नविद्या च।

ॐ इरिइरिकालीति सच्चक्रमुद्रयाऽनिशं ।
क्षयाय कृष्णध्यानेन, मासं यावत् प्रयुज्यते ॥ २७ ॥

विद्या–महाविद्या–उपविद्या–मन्त्र–मन्त्रराजपीठानि ५। सरस्वती, त्रिभुवनस्वामिनी, श्रीदेवी, यक्षराज ४ ।

आद्ये सरस्वती देवी त्रिभुवनस्वामिनी ततः ।
तृतीये कमला तुर्ये यक्षराजः स्फुरत्प्रभः ॥ २८ ॥
चत्वारो नाकिनाथास्ते धरणोऽप्यहिनायकः ।
रोहिणीप्रमुखा देव्योऽधिष्ठात्र्यः पञ्चमे पदे ॥ २९ ॥
यक्षकर्दमसंयुक्ते पाणौ कर्पूरवासिते ।
लिखिते श्री मेरुमन्त्रे दोषी सज्जो भवेद् ध्रुवं ॥ ३० ॥
वारयति प्रत्यनीकं लिखितोऽक्षरपङ्क्तिभिः ।
पाणिपद्मे रूप्यकांस्यपात्रे सौख्याय जायते ॥ ३१ ॥
ब्रह्मधारी स्वल्पवारिकृतस्नानः स्थिरः शुचिः ।
पवित्रवासा गन्धाढ्यो मन्त्रराजं स्मरेद् गुरुः ॥ ३२ ॥
श्रीमतो मन्त्रराजस्य सप्तमेरुमयस्य यः ।
लक्षत्रयं जपेत् सूरिः स भवेद् गौतमः स्वयम् ॥ ३३ ॥



दिक्कालासनमुद्राद्यैः स्मृतोऽसौ सर्वकर्मकृत् ।
ललाटपाणिवाक्पिण्डसिद्धीनां कारणं परम् ॥ ३४ ॥
अष्टोत्तरसहस्त्रं तु जपितं दीपपर्वणि ।
पुष्पाणामक्षतानां च चूर्णं वश्याय जायते ॥ ३५ ॥
प्रणवं आं क्रमेण क्रों मायाबीजं श्रियं स्मरेत् ।
ध्यानरम्भे सदा सूरी रक्षा(क्ष)याऽभीप्सिताप्तये ॥ ३६ ॥
त्रिसन्ध्यं यः स्मरेन्नित्यं शतमष्टोत्तरं सुधीः ।
लब्धिपात्रं स जायेत प्रभावकशिरोमणिः ॥ ३७ ॥

चतुःपञ्चाशत्स्मरणेऽप्येवम् ।

आद्यो मेरुः सौख्यकर्ता द्वितीयो राजवश्यकृत् ।
तृतीयो दुष्टविच्छेत्ता तुर्यो भ्रष्टस्य राज्यदः ॥ ३८ ॥
पञ्चमः षट्कर्मकारी षष्ठः सर्वार्थसिद्धिदः ।
सप्तमो व्योमगमनमुख्यलब्धिविधायकः ॥ ३९ ॥
सौभाग्यं परमेष्ठी च सुरभी प्रवचनं तथा ।
कृताञ्जलिश्च पञ्चैता मुद्राः कार्याश्च सूरिणा ॥ ४० ॥
चक्रं कुलिशमुद्रा च शंख–गरुडनामनी ।
गिरिमुद्रा तथा ज्ञेया ध्येयादिषु विशेषतः ॥ ४१ ॥
उपविद्या तथा ध्येया वश्ये कमलमुद्रया ।
सौभाग्ये मोहने वश्ये विद्या सौभाग्यलक्षणा ॥ ४२ ॥
शत्रुक्षयाय मासं त्रिसन्ध्यं चक्रमुद्रया ।
इरिकालिः सदा ध्येया ज्ञाने बाहुबलिस्तथा ॥ ४३ ॥
परमेष्ठिप्रवचनमुद्रे द्वे गदिते पुनः ।
शुक्लध्यानेन कार्याय धूम्रतोच्चाटनाय च ॥ ४४ ॥
'आयरिय मेरु मम सर्वसिद्धिं कुरु कुरु स्वाहा'
गद्यमेतत्, कार्यकाले नमःस्वाहे यथाविधि ॥ ४५ ॥
लक्ष्मीकीर्तिधृतिविद्या विद्यापीठाज्जयस्तथा ।
विद्या बाहुबलिः श्रेष्ठा ज्ञानादेशप्रदायिनी ॥ ४६ ॥



सौभाग्यमुद्रया पुष्पलक्षेणैकेन जप्यते ।
सौभाग्यमन्त्रराजोऽसौ वश्यमोहनकारकः ॥ ४७ ॥
उपविद्याजपात् सिद्धा वादिस्फूर्त्तिविघातिनी ।
परविद्यानिराकर्त्री किंशुकध्यानसंस्मृता ॥ ४८ ॥
चतुर्थे कृतजापश्च कृष्णध्यानसमाश्रितः ।
विपक्षोच्छेदनं तूर्णं करोति नियतं गुरुः ॥ ४९ ॥
मृत्युस्तम्भनवन्धाद्युच्चाटनं विदधात्ययम् ।
सच्चक्रमुद्रया मासेनैकेन विहितादरः ॥ ५० ॥
मासं वा मासषट्कं वा वर्षं वा जापतत्परः ।
यं यमर्थं प्रार्थयते तं तं प्राप्नोति लीलया ॥ ५१ ॥
स्तम्भयत्यरिसैन्यानि मेघाकृष्टिं करोति च ।
कृतोपवासः सज्जापस्त्रिसप्तनवभिर्दिनैः ॥ ५२ ॥
अलोभो जितपञ्चाक्षः सच्छीलोऽनघसत्यवाक् ।
त्रिधा शुद्धोऽल्पपयसा मन्त्रराजं स्मरेद् गुरुः ॥ ५३ ॥
मौनभोजी सर्वमन्त्रं कायोत्सर्गेण यः स्मरेत् ।
तं सेवन्ते सुरा वक्तुं प्रभावं चास्य कः क्षमः ॥ ५४ ॥
नाल्पकार्ये प्रयोक्तव्यो मन्त्रराजः कदाचन ।
हीनेऽस्मिन् विधिना किन्तु स्मर्तुः प्राणेषु संशयः ॥ ५५ ॥
संघकार्ये महाविघ्ने चैत्योच्छेदादिकर्मसु ।
सूरिणा स्थिरचित्तेन मन्त्रराजः प्रयुज्यते ॥ ५६ ॥
त्रिसन्ध्यं यो जपेन्नित्यं कायोत्सर्गेण शुद्धधीः ।
आस्तिक्येन लभेत्सिद्धिं मुक्तिं सोऽस्माच्च सद्यशाः ॥ ५७ ॥
श्री मानदेवसूरीन्द्रैर्व्याख्यातः पुण्यशालिभिः ।
सूरिप्रभावसुभगः पूर्वं श्रीगौतमाभिधः ॥ ५८ ॥

इति श्री अञ्चलगच्छेश्वरश्रीमेरुतुंगसूरिसमुद्धृतः श्रीकल्पः ।



कमलाकरसूरिविरचितः

# श्रीसूरिमन्त्रसाधनक्रमः

श्री[ मद् ]वीरजिनं नत्वा स्मृत्वा श्री गौतमप्रभुम् ।
ब्रवीमि सूरिमन्त्रस्य साधनक्रममद्भुतम् ॥ १ ॥

कर्पूरप्रभृतिद्रव्यैः, पूजयन् गौतमप्रभुम् ।
कायोत्सर्गरतो नित्यं चैत्यवन्दनतत्परः ॥ २ ॥

परोपकारप्रवरः पञ्चमौन (नी) जितेन्द्रियः ।
अकुर्वन् वनितालापं विकथास्वापवर्जितः ॥ ३ ॥

शुचिः स्वल्पपयःक्लृप्तनित्यस्नानः सिताम्बरः ।
विजने वा वने रम्ये स्थितः स्थाने तपश्चरेत् ॥ ४ ॥

सारस्वतमये पीठे विद्यायाः प्रथमे पुरः ।
उपोषितं भवेदेकं विकृतित्यागपञ्चकम् ॥ ५ ॥

आचाम्लं (म्लकं) निर्विकृतिपञ्चकाचाम्लके तथा ।
स्युर्निर्विकृतयः पञ्च पुनराचाम्लकं तथा ॥ ६ ॥

निर्विकृत्युपवासौ च दिनानामेकविंशतिः ।
त्रैलोक्यस्वामिनी देवी पूज्या पीठे द्वितीयके ॥ ७ ॥

महाविद्याभिधाने तु भवेदेकमुपोषितम् ।
स्यान्निर्विकृतिराचाम्लत्रिकं निर्विकृतिश्चतुः ॥ ८ ॥

आचाम्लं निर्विकृत्योश्च द्वयं तस्मादुपोषितम् ।
त्रयोदश दिनान्येवं ततः पीठे तृतीयके ॥ ९ ॥

उपविद्याद्वये नित्यं श्रीदेवीसमुपासिते ।
अभक्तमेकमत्रोक्तं विकृतित्यक्तमष्टकम् ॥ १० ॥



पञ्चाम्लानि च सप्त स्युर्भक्तानि विकृतिं विना ।
आचाम्लं विकृतित्यागयुग्मं पुनरुपोषितम् ॥ ११ ॥
पञ्चविंशतिरित्यहूनां मन्त्रपीठे चतुर्थके ।
श्रीगणिपिटिकाभिख्ययक्षराजेन पूजिते ॥ १२ ॥
उपोषितं ततो भक्तपञ्चकं विकृतिच्युतम् ।
आचाम्लमथवा भक्तं दिनाष्टकमभूदिति ॥ १३ ॥
व्यक्तमत्रार्हतज्योतिभास्व(र्भवे)दद्भुतवैभवे ।
मन्त्रराजे चतुःषष्टिशक्रसंसेवितक्रमे ॥ १४ ॥
आचाम्लानि तपः कुर्यात् षोडशैवं समाहितः ।
स्वगुरूक्तं हृदि ध्यायन् सूरिमन्त्रमहर्निशम् ॥ १५ ॥
इति विधिना यस्तनुते कमलाकरसूरिसंस्तुतेन जपम् ।
स भवति गौतमविभुवद् बहुलब्धिपदस्य पात्रमिह ॥ १६ ॥

इति श्री सूरिमन्त्रसाधनविधिस्तुतिरियम् ।





# सूरिमन्त्रस्य स्वरूपं जपविधिः पटालेखनविधिश्च

अर्हं । श्री गौतमस्वामिने नमः ।

कमलकर्णिकामध्ये 'ॐ ह्रीँ श्रीँ' मन्त्रराजो लेख्यः । पञ्चमवलके—ॐ नमो जिणाणं, नमो ओहिजिणाणं, नमो परमोहिजिणाणं, नमो अणंतोहिजिणाणं, नमो अणंताणंतोहिजिणाणं, नमो केवलीणं, नमो सामन्नकेवलीणं, नमो भवत्थकेवलीणं, नमो अभवत्थकेवलीणं, नमो उग्गतवचरणचारीणं, नमो चउद्दसपुव्वीणं, नमो दसपुव्वीणं, नमो इक्कारसंगीणं । एएसिं सव्वेसिं नमुक्कारं किच्चा जमिमं विज्जं पउंजामि सा मे विज्जा पसिज्झउ । विद्यापीठम् ।

विद्यापीठं चतुर्थवलकम् । ॐ नमो भगवओ बाहुबलिस्स पन्नसमणस्स सिज्झउ मे भगवई महइ महाविज्जा ॐ वग्गु वग्गु निवग्गु निवग्गु सोमे सोमणसे महु महुरे इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा । विद्याजापः १६००० । विशेषस्तु सौभाग्यमुद्रया पीतध्यानेन सौभाग्यार्थे जापः १६००० ।

तृतीयवलके—इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए कालिकालि महाकालि स्वाहा । सहस्र १२ जातिपुष्पैः सारस्वतः । तथोपवासं कृत्वाऽष्टोत्तरे सहस्रजापे स्वप्नविद्यापि । उपविद्यायाः किंशुकध्यानेन पर्वतमुद्रया वश्यार्थे जापः सहस्रः १२ ॥

द्वितीयवलके—ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियआयरियकालि स्वाहा ।



मन्त्रपीठमिदम् । परमेष्ठिमुद्रया द्वादशसहस्रजापः करेण ।

प्रथमवलके–ॐ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा। शुक्लध्यानेन परमेष्ठिमुद्रया पञ्चप्रस्थानोऽपि लक्षप्रमाणोऽपि ध्येयः सर्वोत्कृष्टा सिद्धिर्भवति ।

षष्ठवलके चतुर्विंशतिर्दलानि। दले दले 'ॐ ऋषभाय ह्रीँ नमः' ॐ अजिताय ह्रीँ नमः' एवं सर्वे तीर्थंकरा लेख्याः । अयं मंडलविधिः । तथा शतपत्रिकापुष्पाणां अक्षतानां १०८ दिन २१ जपेत्, पश्चात् तच्चूर्णं कृत्वा वासेषु क्षिपेत् वीरकल्याणकेषु उपवासेन । अग्निकुण्डकल्पना सूर्यमणिषु, मण्डलकल्पनाऽक्षेषु, अष्टसमृद्धिकल्पना कपर्देषु, इन्द्रश्चन्द्रो वाऽधिष्ठाता षोडश विद्यादेव्यश्च ।

नमो अरहंताणं नमो सिद्धाणं नमो आयरियाणं नमो उवज्झायाणं नमो लोए सव्वसाहूणं। शान्तिक-पौष्टिक-स्तंभन-मोहन-वशीकरण-आकर्षण-उच्चाटन विद्वेषण-क्षेत्ररक्षणाद्यनेकक्रियासाधकस्य चौरारिमारिकृतोपसर्गनाशनस्य व्याघ्राहि-द्विप-डाकिनी-भूत-पिशाच-राक्षसादिभयापहारकस्य सर्वशत्रुमदभञ्जनस्य स्वर्गापवर्गसाधनस्य इहलोकाभ्युदयावहस्य पञ्चनमस्कारस्य चक्रविधानं व्याख्यास्यामः। तद्यथा–प्रथमं तावत् षट्कोणचक्रमालिख्य तस्य मध्येऽर्हंकारं प्रस्थाप्य षट्स्वपि कोणेषु 'अप्रतिचक्रे फट्' अपसव्यं संलिख्य बाह्ये 'विचक्राय स्वाहा' इति सव्यं संलिख्य पुनर्बाह्ये श्री–ह्री धृति–कीर्ति–बुद्धि–लक्ष्मीः संलिख्य तद्बाह्ये वलयं कारयेत् । वलयमध्ये नमो जिणाणं, नमो ओहिजिणाणं, नमो परमोहिजिणाणं, नमो सव्वोहिजिणाणं, नमो अणंतोहिजिणाणं, नमो कुट्ठबुद्धीणं, नमो बीजबुद्धीणं, नमो पयाणुसारीणं, नमो संभिन्नसोयाणं, नमो उज्जुमईणं, नमो विउलमईणं, नमो दसपुव्वीणं, नमो चउदसपुव्वीणं, नमो अट्ठंगमहानिमित्तकुसलाणं, नमो विउव्वणइड्ढिपत्ताणं, नमो विज्जाहराणं, नमो चारणाणं, नमो पण्हसमणाणं, नमो आगासगामीणं, नमो आसीविसाणं, नमो दिट्ठीविसाणं, नमो उग्गतवाणं, नमो तत्तवाणं, नमो महातवाणं, नमो घोरतवाणं, नमो घोरपरक्कमाणं, नमो घोरगुणबंभयारीणं, नमो आमोसहिपत्ताणं, नमो जल्लोसहिपत्ताणं, नमो खेलोसहिपत्ताणं, नमो विप्पोसहिपत्ताणं, नमो



सव्वोसहिपत्ताणं, नमो गुणवल्लीणं, नमो दधिसवणाणं, नमो खीरासवणाणं, नमो सप्पिसवणाणं, नमो मधुसवणाणं, नमो अभियसवणाणं, नमो अक्खीणमहाणसाणं, नमो भयवदो वद्धमाणबुद्धिसिरि(री)णं, नमो सव्वसिद्धायदाणाणं, जस्स जत्तियं धम्मप्पहं निगच्छे तस्य तत्तियं विणयाइयं पउंजे काएण वाचा मणसा चित्त सक्कारमेवं सिरि पन्नगेण ॐ स्वाहा इत्यनेनावेष्टय अस्य मन्त्रस्य क्रिया हस्तपादान् प्रक्षाल्य श्रीखण्डेन सम्मार्ज्य कर्णावष्टोत्तरशतमभिमन्त्र्य स्वपेत्, ततः शुभाशुभं प्रारब्धकर्मणः समाप्तिमसमाप्तिं वा कथयति, अन्यथा न भवति। एवं प्रथमवलयस्य विधिः।

ॐ नमो भगवति वीरे सर्वभयखयंकरे देवाहिदेवतित्थंकरे धम्मवरचाउरंतचक्कवट्टिजिणे अरिहा ॐ वीरे अरहंत सर्वोपद्रवं हर हर हुं हः संघस्य स्वाहा। वार २१ स्मरणीया सर्वरोगोपशमनाय श्रीब्रह्मशान्तिर्वृषभासनासीनो मुकुटाभरणो द्विकरो दक्षिणे वज्रं वामे दण्डः सरलः सपादुको लेखनीयः पूजनीयश्चानेन मन्त्रेण।



# द्वादशलब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ नमो जिणाणं

२ नमो ओहिजिणाणं

३ नमो परमोहिजिणाणं

४ नमो अणंतोहिजिणाणं

५ नमो अणंताणंतोहिजिणाणं

६ नमो केवलीणं

७ नमो भवत्थकेवलीणं

८ नमो अभवत्थकेवलीणं

९ [नमो] उग्गतवचरणचारीणं

१० नमो चउद्दसपुव्वीणं

११ नमो दसपुव्वीणं

१२ नमो इक्कारसंगीणं।

एएसिं सव्वेसिं नमुक्कारं किच्चा जमहं (मियं) विज्जं पउंजामि सा मे विज्जा पसीयउ।

ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स।

ॐ वग्गु वग्गु निवग्गु सोमे सोमणसे महु महुरे इरिकालि पिरिकालि सिरिकालि महाकालि किरियाए हिरियाए।

ॐ किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिय आयरियकालि

किरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा।

श्रीरत्नसिंहसूरितो लब्धः।



'पसीयउ' एतदन्ता 'सर्वकार्यप्रसाधिका १। 'पण्हसमणस्स' एतदन्ता स्वप्नविद्या २। हिरियाए एतदन्ता सोहग्गकरी वग्गुविज्जा ३।

तथा श्रीगौतमस्याक्षराणां शत २१ प्रदत्तानि। पूर्वं भगवदाज्ञया श्रीगौतमेन द्वात्रिंशत्च्छ्लोकप्रमाणः श्रीसूरिमन्त्रः कृतः कालदोषात् हीयमानो जातः। दुप्पसहो अहुठश्लोकान् पठिष्यति। इह सौभाग्य-परमेष्ठि-ज्ञान-सुरभि-कृताञ्जलिमुद्रापञ्चकं ध्याने। श्री जिनवल्लभगणिस्वहस्तलिखितप्रतितः सूरिक्रमेण च लिखितमिदम्। १२३८ वर्षादारभ्य यन्त्रादिविशेषोऽभूदिति संप्रदायः ॥ ४ ॥

* * *

## द्वादशलब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ ॐ नमो जिणाणं

२ ॐ नमो ओहिजिणाणं

३ ॐ नमो परमोहिजिणाणं

४ ॐ नमो अणंतोहिजिणाणं

५ नमो सुयजिणाणं

६ नमो केवलिजिणाणं

७ नमो भवत्थकेवलीणं

८ नमो अभवत्थकेवलीणं

९ नमो उग्गतवचरणचारीणं

१० नमो चउद्दसपुव्वीणं

११ नमो दसपुव्वीणं

१२ नमो इक्कारसंगीणं।

सव्वेसिं एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ।



ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स ॐ वग्गु वग्गु निवग्गु सुमणे सोमणसे महु महुरे किरियाए पिरियाए सिरियाए हिरियाए आयरियाए।

ॐ किरिकिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियआयरियकालि ।

ॐ किरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा । सूरिमन्त्रः । वार २१ जापः ।

हरिप्रभाचार्याल्लब्धः ।

* * *

## द्वादशलब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ ॐ नमो जिणाणं

२ नमो ओहिजिणाणं

३ नमो परमोहिजिणाणं

४ नमो सव्वोहिजिणाणं

५ नमो अणंतोहिजिणाणं

६ नमो अणंताणंतोहिजिणाणं

७ नमो भवत्थकेवलीणं

८ नमो अभवत्थकेवलीणं

९ नमो उग्गतवचरणचारीणं

१० नमो चउद्दसपुव्वीणं ।

११ नमो दसपुव्वीणं

१२ नमो इक्कारसंगधारीणं



सव्वेसिं एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ।

ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स ॐ नमो वग्गु वग्गु निवग्गु निवग्गु सोमणसे महु महुरे ।

इरिकालि विरिकालि पिरिकालि किरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा।

इरियाए विरियाए पिरियाए किरियाए सिरियाए हिरियाए आयरियाए स्वाहा ।

इरिइरिकालि विरिविरिकालि पिरिपिरिकालि किरिकिरिकालि सिरिसिरि-कालि हिरिहिरिकालि आयरियकालि ।

इरिमेरु विरिमेरु पिरिमेरु किरिमेरु सिरिमेरु हिरिमेरु [1]आ० [यरियमेरु स्वाहा]।

१ एतत्प्रतिसमाप्तौ 'वओ बाहुबलिस्स पण्हसमणस्स सिज्झउ मे भगवइ महइ महाविज्जा' इति पाठः 'सिरिमेरु हिरिमेरु आ०' इत्यतः परं दृश्यते ।



# [1]द्वादश(?)लब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ ॐ नमो जिणाणं
२ ॐ नमो ओहिजिणाणं
३ ॐ नमो परमोहिजिणाणं
४ ॐ नमो अणंतोहिजिणाणं
५ ॐ नमो अणंताणंतोहिजिणाणं
६ ॐ नमो सामन्नकेवलीणं
७ ॐ नमो भवत्थकेवलीणं
८ ॐ नमो अभवत्थकेवलीणं
९ ॐ नमो उग्गतवचरणचारीणं
१० ॐ नमो चउद्दसपुव्वीणं
११ ॐ नमो दसपुव्वीणं
१२ ॐ नमो इक्कारसंगीणं[1] (?)
१३ ॐ नमो इक्कारसंगसुत्तत्थधारीणं

---

1 एकस्मिन् हस्तलिखिते पत्रेऽयं सोमविमलसूरिलिखितः सूरिमन्त्रो दृश्यते। तत्र च 'ॐ नमो इक्कारसंगसुत्तत्थधारीणं' इत्यतः पूर्वम् +ईदृशं चिह्नं विधाय पत्रस्य पार्श्वभागे ( Marjin मध्ये ) + ईदृशं पूरणार्थं चिह्नं विधाय 'ॐ नमो इक्कारसंगीणं' इति पाठो लिखितोऽस्ति। अत्र च क आशयो लेखकस्येति स्पष्टं निश्चेतुं न शक्यते।

'ॐ नमो इक्कारसंगसुत्तत्थधारीणं' इत्यस्मात् पदात् पूर्वम् 'ॐ नमो इक्कारसंगीणं' इति पदमधिकं पठनीयमित्याशयो यदि भवेत् तर्हि इयं त्रयोदशपदी भवति। यदि तु 'ॐ नमो इक्कारसंगसुत्तत्थधारीणं' इत्यस्य स्थाने पाठान्तररूपेण 'ॐ नमो इक्कारसंगीणं' इत्यपि पठ्यते इत्याशयो भवेत् तर्हि द्वादशपदी अत्र अभिमता लेखकस्येति भाति। मानदेवसूरिसम्मतद्वादशपद्या अत्रत्यलब्धिपदानां संवादित्वं दृष्ट्वा द्वादशपदयुक्तेषु सूरिमन्त्रविशेषेष्वयं सूरिमन्त्रो निवेशितोऽस्माभिः। पदेभ्यः पूर्वं हस्तलिखितपत्रे केऽप्यङ्का न सन्ति, १ २ ३ इत्यादयोऽङ्का अस्माभिरेव लिखिता इति ध्येयम्।





एएसिं सव्वेसिं नमुक्कारं किच्चा जमिउं(यं) विज्जं पउंजामि सा मे विधा-(ज्जा) पसिज्झउ ॥

ॐ नमो भगवओ बाहुवलिस्स पण्हसमणस्स सिज्झउ मे भगवई महाविज्जा ॥

ॐ वग्गु वग्गु निवग्गु निवग्गु सुमणे सोमणसे महुमहुरे स्वाहा ।

ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हरिकालि आयरियकालि स्वाहा ॥

ॐ इरिआई किरिआई गिरिआई पिरिआई सिरिआई हरिआई आयरिआई कालि महाकालि स्वाहा ॥

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हरिहरिकालि आयरिअ आयरिअकालि स्वाहा ॥

ॐ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हरिमेरु आयरिमेरु नमः स्वाहा ॥ श्री मन्त्राधिराजः संपूर्णः ।

श्री सोमविमलसूरिणा लिखितः । श्रीः ।



# द्वादशलब्धिपदयुक्तः सूरिमन्त्रविशेषः[1]

*(१) ॐ नमो जिणाणं

ॐ नमो ओहिजिणाणं

ॐ नमो परमोहिजिणाणं

ॐ नमो अणंतोहिजिणाणं

ॐ नमो अणंताणंतोहिजिणाणं

ॐ नमो सामन्नजिणाणं

ॐ नमो भवत्थकेवलीणं

ॐ नमो अभवत्थकेवलीणं

ॐ नमो उग्गतवाणं

ॐ नमो चउदसपुव्वीणं

ॐ नमो दसपुव्वीणं

ॐ नमो एगारसंगीणं

एएसिं सव्वेसिं नमोक्कारं किच्चा जमियं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा।

(२) ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स स्वाहा वग्गु वग्गु निवग्गु निवग्गु सुमणे सोमणसे महु महुरे स्वाहा।

(३) ॐ किरि किरि कालि पिरि पिरि कालि सिरि सिरि कालि हिरि हिरि कालि महाकाली स्वाहा।

(४) ॐ किरियाए पिरियाए सिरियाए हिरियाए इरियाए स्वाहा।

(५) ॐ किरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा।

---

1 अर्वाचीनस्यैकस्य सूरिवरस्य सूरिमन्त्रपटानुसारेणात्र लिखितोऽयं सूरिमन्त्रः।

* (१) (२) इत्यादयोऽङ्काः सूरिमन्त्रपटे वलयसूचकाः



## द्वादशलब्धिपदयुक्तः सूरिमन्त्रविशेषः[1]

ॐ ह्रीं श्रीं नमो जिणाणं १ ।

ॐ नमो ओहिजिणाणं २ ।

ॐ नमो परमोहिजिणाणं ३ ।

ॐ नमो सव्वोहिजिणाणं ४ ।

ॐ नमो अणंतोहिजिणाणं ५ ।

ॐ नमो अणंताणंतोहिजिणाणं ६ ।

ॐ नमो सामन्नकेवलीणं ७ ।

ॐ नमो भवत्थकेवलीणं ८ ।

ॐ नमो अभवत्थकेवलीणं ९ ।

ॐ नमो उग्गतवचरणचारीणं १० ।

ॐ नमो दसपुव्वीणं ११ ।

ॐ नमो इक्कारसंगीणं १२ ।

एएसिं सव्वेसिं नमोक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा । प्रथमं विद्यापीठम् ।

ॐ नमो भगवओ बाहुवलिस्स पन्नसमणस्स सिज्झउ मे भगवई महइ महाविज्जा ।

ॐ वग्गु वग्गु निवग्गु सुमणसे महुमहुरे इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा । महाविद्यापीठम् ।

इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए कालि कालि महाकालि स्वाहा । उपविद्यापीठम् ।

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरिय आयरियकालि स्वाहा । मन्त्रपीठम् ।

ॐ इरिमेरु किरिमेरु गिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा । मन्त्रराजः ।

ॐ ह्रीं वीरे वीरे महावीरे जयवीरे सेणवीरे वद्धमाणवीरे जयविजयए जयंते अपराजिए अणिहे सव्वट्ठसिद्धे निव्वुए महाणसे महाबले ॐ ह्रीं ठः ठः ठः स्वाहा । वर्द्धमानविद्या ।

---

1 आचार्यश्रीकनकविमलसूरिमहाराजसत्कायामेकस्यां प्रतावयं सूरिमन्त्रो दृश्यते ।



## द्वादश (एकादश ? )लब्धिपदयुक्तः सूरिमन्त्रविशेषः

नमो जिणाणं
नमो ओहिजिणाणं
नमो परमोहिजिणाणं
नमो अणंतोहिजिणाणं
नमो अणंताणंतोहिजिणाणं
नमो केवलीणं
नमो भवत्थकेवलीणं
[नमो अभवत्थकेवलीणं]
नमो उग्गतवचरणचारीणं
नमो चउद्दसपुव्वीणं
नमो दसपुव्वीणं
नमो इक्कारसंगीणं

सव्वेसिं एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसीयउ ।

ॐ नमो भगवओ वाहुवलिस्स पण्हसमणस्स सिज्झउ मे भगवई महइ महाविज्जा ।

ॐ वग्गु वग्गु निवग्गु सोमण (सुमणे) सोमणसे महु महुरे ।

इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि कालि कालि महाकालि ।

ॐ इरि इरि कालि किरि किरि कालि गिरि गिरि कालि पिरि पिरि कालि सिरि सिरि कालि हिरि हिरि कालि आयरियकालि ।

इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा ।

ललितदेवसूरितो लब्धः ।

---

1 मुर्शिकमलमोहनजैनज्ञानमन्दिरे विद्यमानायामेकस्यां प्रतावयं सूरिमन्त्रविशेषो दृश्यते । अत्र च एकादशैव लब्धिपदानि लिखितानि दृश्यन्ते । किन्तु एकादशलब्धिपदयुक्तः कोऽपि सूरिमन्त्रः क्वचिदप्यस्माभिर्न दृष्टो न वा श्रुतः । अतोऽत्र 'नमो भवत्थकेवलीणं' इत्यनन्तरम् 'नमो अभवत्थकेवलीणं' इति पाठो लेखकप्रमादादिवशात् पतितः सम्भाव्यते । तत्पूरणे तु सम्पूर्णा द्वादशपदी भवति । एवं विचिन्त्यायं सूरिमन्त्रो द्वादशलब्धिपदयुक्तसूरिमन्त्रेषु निवेशितोऽस्माभिः ।



# त्रयादश [?]लब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ ॐ नमो जिणाणं
२ ॐ नमो ओहिजिणाणं
३ ॐ नमो परमोहिजिणाणं
४ ॐ नमो सव्वोहिजिणाणं
५ ॐ नमो खीरासवलद्धीणं
६ ॐ नमो महुयासवलद्धीणं
७ ॐ नमो संभिन्नसोईणं
८ ॐ नमो आगासगामणी(मी)णं
९ ॐ नमो वेउव्वियलद्धीणं
१० ॐ नमो चउद्दसपुव्वीणं
११ ॐ नमो केवलिजिणाणं
१२ ॐ नमो भवत्थकेवलिजिणाणं

१३ ॐ नमो सव्वेसिं [1]उग्गवेमेण (पि जिणाणं।)

जमहं विज्जं पउंजामि सा मे विज्जा एएसिं पसीयउ।

एवं इरिइरि किरिकिरि गिरिगिरि पिरिपिरि हिरिहिरि सिरिसिरि स्वाहा।

एवं इरियाइ किरियाइ गिरियाइ पिरियाइ हिरियाइ सिरियाइ स्वाहा।

ॐ ह्रीं श्रीं इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु हिरिमेरु सिरिमेरु आयरियमेरु स्वाहा।

सू० वै० सत्कः[2]॥

1 'उग्गवेमेण' इत्यस्य कोऽप्यर्थः सम्यग् न ज्ञायते। तस्य स्थाने 'पि जिणाणं' इति पाठोऽत्र सम्भाव्यते। एतादृशं लब्धिपदमन्यत्रापि प्राप्यते च।

2 प्रत्यन्ते 'सू० वै० सत्कः' इति लिखितमस्ति किन्तु कोऽस्य परमार्थस्तन्न ज्ञायते।



## पञ्चदशलब्धिपदयुक्तः सूरिमन्त्रविशेषः

१ ॐ नमो जिणाणं
२ ॐ नमो ओहिजिणाणं
३ ॐ नमो अणंतोहिजिणाणं
४ ॐ नमो सव्वोहिजिणाणं
५ ॐ नमो भवत्थकेवलीणं
६ ॐ नमो चउदसपुव्वीणं
७ ॐ नमो दसपुव्वीणं
८ ॐ नमो खीरासवलद्धीणं
९ ॐ नमो भगवओ अरहओ
१० ॐ नमो कुट्ठबुद्धीणं
११ ॐ नमो बीजबुद्धीणं
१२ ॐ नमो नाणीणं
१३ ॐ नमो ओहिनाणीणं
१४ ॐ नमो दंसणीणं
१५ ॐ नमो चारित्तीणं

एयाण नमुक्कारप्पभावेण सिज्झउ मे भगवई महाविज्जा ।

ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स महापण्हसमणस्स ॐ वग्गु वग्गु निवग्गु सुवग्गु परमवग्गु स्वाहा ।

ॐ वागुरिए भागुरिए ॐ नमो हरिए ॐ सुमणे सोमणसे स्वाहा ।

ॐ इरिकाली ॐ फिरिकाली ॐ सिरिकाली ॐ हिरिकाली

ॐ इरिइरिकाली ॐ फिरिफिरिकाली ॐ सिरिसिरिकाली ॐ हिरिहिरिकाली ॐ आयरियमेरुकाली स्वाहा ।

ॐ इरिमेरु ॐ फिरिमेरि ॐ सिरिमेरि ॐ हिरिमेरि ॐ आयरियमेरु मिरि स्वाहा ।

श्रीशालिसूरितो लब्धः ।



## षोडशलब्धिपदयुक्तः सूरिमन्त्रविशेषः[1]

१ ॐ नमो जिणाणं

२ ॐ नमो ओहिजिणाणं

३ ॐ नमो परमोहिजिणाणं

४ ॐ नमो अणंतोहिजिणाणं

५ ॐ नमो अणंताणंतोहिजिणाणं

६ ॐ नमो सामन्नकेवलीणं

७ ॐ नमो भवत्थकेवलीणं

८ ॐ नमो चउदसपुव्वीणं

९ ॐ नमो दसपुव्वीणं

१० ॐ नमो नवपुव्वीणं

११ ॐ नमो इक्कारसंगसुत्तधारीणं

१२ ॐ नमो खीरासवलद्धीणं

१३ ॐ नमो महुआसवलद्धीणं

१४ ॐ नमो संभिन्नसोयाणं

१५ ॐ नमो पयाणुसारीणं

१६ ॐ नमो कुट्ठबुद्धीणं

एएसिं सव्वेसिं नमोक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा(१)[2] ।

---

1 वर्तमानकालीनादेकस्मात् सूरिवराल्लब्धे पटेऽयं सूरिमन्त्रो लिखितोऽस्ति ।

2 (१) (२) इत्यादयोऽङ्काः सूरिमन्त्रपटे वलयसूचकाः ।



ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स महापण्हसमणस्स सिज्झउ मे भगवई महइ महाविज्जा । ॐ वग्गु वग्गु निवग्गु निवग्गु सुमणे सोमणसे महु महुरे स्वाहा । ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वाहा (२) ।

ॐ इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए कालि कालि महाकालि स्वाहा (३) ।

ॐ इरिइरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियकालि स्वाहा (४) ।

ॐ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा (५) ।



# श्रीसीमन्धरस्वामिभिरुपदिष्टः

अम्बिकादेव्या प्रदत्तः श्रीमानदेवसूरितः प्रवृत्तः

## सूरिमन्त्रः

आसी समुद्दगणहरसीसो हरिभद्दगुरुवरवयंसो ।
सिरिमाणदेवसूरी जुगप्पहाणो गुणनिहाणो ॥ १ ॥
विक्कमकाला पणसयबासीई ५८२ वच्छरे हु सो ठविओ ।
सूरिपयंमि य गुरुणा अइसयसयपयडमाहप्पो ॥ २ ॥
तस्स य समुद्दगुरुणा मंतो नियचंदवायणासिद्धो ।
दिन्नो हरिभद्देण वि विज्जाहरवायणाइ तया ॥ ३ ॥
चिरमित्तपीइतो सो दिन्नो हरिभद्दसूरिणा बिइओ ।
विज्जाहरसाहिणो मंतो सिरिमाणदेवस्स ॥ ४ ॥
मंते पयसारिच्छं दुब्भिक्खं दारुणं च जणमरणं ।
देहे य रोगपीडा एवं कारणचउक्केण ॥ ५ ॥
विस्सरिय मंतमेयं तत्तो दुहिओ करेइ उववासे ।
सिरिउज्जयंततित्थे आराहइ अंबियं देविं ॥ ६ ॥
सोलसउववासेहिं परितुट्ठा अंबिया महादेवी ।
सिरिसीमंधरसामिं पणमिय पुच्छइ विदेहेसु ॥ ७ ॥
सिरिसीमंधरपहुणा उवइट्ठा सूरिविज्ज तो एसा ।
दिन्ना य अंबियाए मायाए माणदेवस्स ॥ ८ ॥
पउमावई वि देवी संतुट्ठा कुणइ तस्स साहेज्जं ।
सो माणदेवसूरी सूरीणं कुणउ कल्लाणं ॥ ९ ॥
सो एसो मंतवरो पंचहिं पीढेहिं अंबियाकहिओ ।
सिरिमाणदेवसूरीहिं झाओ झायंतु सूरिवरा ॥ १० ॥

इति मंत्रपीठिका ।



# द्वाचत्वारिंशल्लब्धिपदयुक्तः सूरिमन्त्रः[1]

१ ॐ ह्रीँ [2]नमो जिणाणं
२ ॐ ह्रीँ नमो ओहिजिणाणं
३ ॐ ह्रीँ नमो परमोहिजिणाणं
४ ॐ ह्रीँ नमो अणंतोहिजिणाणं
५ ॐ ह्रीँ नमो अणंताणंतोहिजिणाणं
६ ॐ ह्रीँ नमो केवलीणं
७ ॐ ह्रीँ नमो भवत्थकेवलीणं
८ ॐ ह्रीँ नमो अभवत्थकेवलीणं
९ ॐ ह्रीँ नमो सामण्णकेवलीणं
१० ॐ ह्रीँ नमो उज्जुमईणं
११ ॐ ह्रीँ नमो विउलमईणं
१२ ॐ ह्रीँ नमो वेउव्वियलद्धीणं
१३ ॐ ह्रीँ नमो सव्वलद्धीणं
१४ ॐ ह्रीँ नमो [3]पन्नासमणाणं
१५ ॐ ह्रीँ नमो जंघाचारणमुणीणं
१६ ॐ ह्रीँ नमो विज्जासिद्धाणं
१७ ॐ ह्रीँ नमो आगासगामीणं

---

1 प्रत्यन्ते "श्रीसीमंधरस्वामिप्रणीतः श्री अंबिकामहादेव्या तथैवोपदिष्टः माणिक्यकुंजरसूरिगुरुसंपत्ति-आणंदऋद्धिवृद्धि कुरु २ स्वाहा" इति लिखितमस्ति।

1 एकस्यां प्रतावयं सूरिमन्त्रः प्रायोऽक्षरशः समान उपलभ्यते इति पं० अम्बालालसम्पादितमुद्रितपुस्तकानुसारेण ज्ञायते। तस्याश्च प्रतेरन्ते ईदृशः उल्लेख उपलभ्यते–"एषः श्री सूरिमन्त्रः श्रीश्रीश्री सीमन्धरस्वामिदेवाधिदेवप्रणीतः श्रीअम्बिकामहादेव्या श्रीमानदेवसूरये समुपदिष्टः श्रीबृहद्गच्छे मूलशाखायां श्रीमानदेवसूरीश्वरपट्टानुक्रमे प्रतिष्ठाक्षणेऽयं मन्त्रः प्रदीयते। आचार्य श्री आत्मारामजी–अपरनामविजयानन्दसूरीश्वरजीस्वहस्तलिखितप्रतेरुत्तारितमिदं श्रेयसे भूयात्, चिरं नन्दतात्।" एतदनुसारेणास्माभिः A संकेतेन पाठान्तराणि प्रदर्श्यन्ते। 2 A मध्ये सर्वपदेषु 'णमो' इति पाठः। 3 पण्हसमणाणं A।



१८ ॐ ह्रीँ नमो आमोसहीणं
१९ ॐ ह्रीँ नमो विप्पोसहीणं
२० ॐ ह्रीँ नमो खेलोसहीणं
२१ ॐ ह्रीँ नमो जल्लोसहीणं
२२ ॐ ह्रीँ नमो सव्वोसहीणं
२३ ॐ ह्रीँ नमो आसीविसाणं
२४ ॐ ह्रीँ नमो दिट्ठीविसाणं
२५ ॐ ह्रीँ नमो वयणविसाणं
२६ ॐ ह्रीँ नमो तत्तलेसाणं
२७ ॐ ह्रीँ नमो सीयलेसाणं
२८ ॐ ह्रीँ नमो चउदसपुव्वीणं
२९ ॐ ह्रीँ नमो दसपुव्वीणं
३० ॐ ह्रीँ नमो एक्कारसंगसुत्तधारीणं
३१ ॐ ह्रीँ नमो दुवालसंगीणं
३२ ॐ ह्रीँ नमो उग्गतवचरण[1]धारीणं
३३ ॐ ह्रीँ नमो सव्वेसिं पि जिणाणं
३४ ॐ ह्रीँ नमो खीरासवलद्धीणं
३५ ॐ ह्रीँ नमो महुआसवलद्धीणं
३६ ॐ ह्रीँ नमो अमियासवलद्धीणं
३७ ॐ ह्रीँ नमो [2]अक्खीणसव्वलद्धीणं
३८ ॐ ह्रीँ नमो अक्खीणमहाणसलद्धीणं
३९ ॐ ह्रीँ नमो संभिन्नसोईणं
४० ॐ ह्रीँ नमो पयाणुसारीणं
४१ ॐ ह्रीँ नमो बीयबुद्धीणं
४२ ॐ ह्रीँ नमो कोट्ठबुद्धीणं

1 °चारीणं A । 2 अक्खीणासवलद्धीणं A ।



४३ एएसिं सव्वेसिं नमोक्कारं किच्चा जमियं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा । विद्यापीठम् १ ।

इह सर्वेषु लब्धिपदेषु 'ॐ ह्रीँ नमो' इत्यक्षराण्यादौ भण्यन्ते । एवं द्वाचत्वारिंशल्लब्धिपदेषु अक्षराणि ४३१, चूलायां अक्षर २९, सामग्र्येण प्रथमपीठाक्षराणि ४६० ।

अथ द्वितीयं महाविद्यापीठम् —

ॐ नमो भगवओ बाहुबलिस्स पण्हस्स महापण्हसमणस्स महापण्हस बलवीरियस्स महाबलवीरियस्स वग्गु वग्गु महावग्गु निवग्गु [1]सुवग्गु सुवग्गु वग्गु निवग्गु निवग्गु निवग्गु वागुरिए महावागुरिए भागुरिए महाभागुरिए मोहरिए महामोहरिए सुमणसे महासुमणसे सिज्झउ मे भगवई महइ महाविद्या (ज्जा) स्वाहा।

इति द्वितीयं महाविद्यापीठम् २ ।

ॐ वग्गु वग्गु निवग्गु निवग्गु सोमे सोमणसे महु महुरे इरिकालि किरिकालि गिरिकाली पिरिकाली सिरिकाली हिरिकाली इरियाई किरियाई गिरियाई पिरियाई सिरियाई हिरियाई कालिकालि महाकाली स्वाहा ।

तृतीयमुपविद्यापीठम् ३ ।

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियकालि स्वाहा ।

मन्त्रपीठं चतुर्थम् ४ ।

ॐ ह्रीँ इरिइरिमेरु १ किरिकिरिमेरु २ गिरिगिरिमेरु ३ पिरिपिरिमेरु ४ सिरिसिरिमेरु ५ हिरिहिरिमेरु ६ ॐ ह्रीँ इरिमेरु ७ किरिमेरु ८ गिरिमेरु ९ पिरिमेरु १० सिरिमेरु ११ हिरिमेरु १२ आयरियमेरु १३ ॐ ह्रीँ अर्हँ मम सर्वसिद्धिं कुरु कुरु स्वाहा ।

मन्त्राधिराजपीठं पञ्चमम् ५ ।

---

१ सुवग्गु वग्गु निवग्गु निवग्गु वागुरिए A ।



# पञ्चाशल्लब्धिपदयुक्तः

## सूरिमन्त्रः

१ ॐ ह्रीं अर्हं णमो जिणाणं

२ ॐ ह्रीं अर्हं णमो ओहिजिणाणं

३ ॐ ह्रीं अर्हं णमो परमोहिजिणाणं

४ ॐ ह्रीं अर्हं णमो अणंतोहिजिणाणं

५ ॐ ह्रीं अर्हं णमो अणंताणंतोहिजिणाणं

६ ॐ ह्रीं अर्हं णमो सव्वोहिजिणाणं

७ ॐ ह्रीं अर्हं णमो बीयबुद्धीणं

८ ॐ ह्रीं अर्हं णमो कुट्ठबुद्धीणं

९ ॐ ह्रीं अर्हं णमो पयाणुसारीणं

१० ॐ ह्रीं अर्हं णमो संभिन्नसोयाणं

११ ॐ ह्रीं अर्हं णमो खीरासवाणं

१२ ॐ ह्रीं अर्हं णमो महुयासवाणं

१३ ॐ ह्रीं अर्हं णमो अमियासवाणं

१४ ॐ ह्रीं अर्हं णमो अक्खीणमहाणसीणं

१५ ॐ ह्रीं अर्हं णमो आमोसहीणं

१६ ॐ ह्रीं अर्हं णमो विप्पोसहीणं

१७ ॐ ह्रीं अर्हं णमो खेलोसहीणं

१८ ॐ ह्रीं अर्हं णमो जल्लोसहीणं

१९ ॐ ह्रीं अर्हं णमो सव्वोसहीणं



२० ॐ ह्रीँ अर्हँ णमो वेउव्वियइड्ढिपत्ताणं
२१ ॐ ह्रीँ अर्हँ णमो सव्वलद्धीणं
२२ ॐ ह्रीँ अर्हँ णमो उज्जुमईणं
२३ ॐ ह्रीँ अर्हँ णमो विउलमईणं
२४ ॐ ह्रीँ अर्हँ णमो जंघाचारीणं
२५ ॐ ह्रीँ अर्हँ णमो विज्जाहराणं
२६ ॐ ह्रीँ अर्हँ णमो पण्हसमणाणं
२७ ॐ ह्रीँ अर्हँ णमो विज्जासिद्धाणं
२८ ॐ ह्रीँ अर्हँ णमो आगासगामीणं
२९ ॐ ह्रीँ अर्हँ णमो तत्तलेसाणं
३० ॐ ह्रीँ अर्हँ णमो सीयलेसाणं
३१ ॐ ह्रीँ अर्हँ णमो तेउलेसाणं
३२ ॐ ह्रीँ अर्हँ वयणविसाणं
३३ ॐ ह्रीँ अर्हँ णमो आसीविसाणं
३४ ॐ ह्रीँ अर्हँ णमो दिट्ठीविसाणं
३५ ॐ ह्रीँ अर्हँ णमो चारणसमणाणं
३६ ॐ ह्रीँ अर्हँ णमो महासमणाणं
३७ ॐ ह्रीँ अर्हँ णमो तेउग्गनिसग्गाणं
३८ ॐ ह्रीँ अर्हँ णमो वाईणं
३९ ॐ ह्रीँ अर्हँ णमो अट्ठंगमहानिमित्तकुसलाणं
४० ॐ ह्रीँ अर्हँ णमो पडिमापडिवन्नाणं
४१ ॐ ह्रीँ अर्हँ णमो जिणकप्पवन्नाणं



४२ ॐ ह्रीँ अर्हँ णमो अणिमाइसिद्धाणं

४३ ॐ ह्रीँ अर्हँ णमो सामन्नकेवलीणं

४४ ॐ ह्रीँ अर्हँ णमो भवत्थकेवलीणं

४५ ॐ ह्रीँ अर्हँ णमो केवलीणं

४६ ॐ ह्रीँ अर्हँ णमो उग्गतवाणं

४७ ॐ ह्रीँ अर्हँ णमो दित्ततवाणं

४८ ॐ ह्रीँ अर्हँ णमो चउदसपुव्वीणं

४९ ॐ ह्रीँ अर्हँ णमो दसपुव्वीणं

५० ॐ ह्रीँ अर्हँ णमो इक्कारसंगीणं

एएसिं सव्वेसिं णमुक्कारं किच्चा जमियं विज्जं पउंज्जामि सा मे विद्या (ज्जा) प्पसिज्झउ स्वाहा ॥ १ ॥

ॐ नमो भगवओ बाहुबलिस्स पण्हसमणस्स महापण्हासमणस्स अतुलिबलवीरियस्स सिज्झउ मे भगवई महइ महाविज्जा । ॐ वग्गु वग्गु निवग्गु निवग्गु समणे लोमणसे महुमहुरे स्वाहा । ॐ इरिकालि किरिकालि गिरिकालि पिरिकालि सिरिकालि हिरिकालि आयरियकालि स्वादा ॥ २ ॥

ॐ इरियाए किरियाए गिरियाए पिरियाए सिरियाए हिरियाए आयरियाए कालिकालि महाकालि स्वाहा ॥ ३ ॥

ॐ इरिइरिकालि किरिकिरिकालि गिरिगिरिकालि पिरिपिरिकालि सिरिसिरिकालि हिरिहिरिकालि आयरियआयरियकालि स्वाहा ॥ ४ ॥

ॐ इरिमेरु किरिमेरु गिरिमेरु पिरिमेरु सिरिमेरु हिरिमेरु आयरियमेरु स्वाहा ॥ ५ ॥

इति पञ्चपीठस्य मूलमन्त्रराजस्य सदैव जापः । निरन्तरस्मरणात् श्री गौतमतुल्यत्वं स्यात् ॥



## एकपञ्चाशल्लब्धिपदयुक्तो विद्याष्टकसाधनप्रकारदर्शकः सूरिमन्त्रविशेषः ।

१ ॐ ह्रीँ अर्हँ श्री नमो जिणाणं
२ ॐ ह्रीँ नमो ओहिजिणाणं
३ ॐ ह्रीँ नमो परमोहिजिणाणं
४ ॐ ह्रीँ नमो सव्वोहिजिणाणं
५ ॐ ह्रीँ नमो अणंतोहिजिणाणं
६ ॐ ह्रीँ नमो अणंताणंतोहिजिणाणं
७ ॐ ह्रीँ नमो सामन्नकेवलीणं
८ ॐ ह्रीँ नमो भवत्थकेवलीणं
९ ॐ ह्रीँ नमो अभवत्थकेवलीणं

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं पउंजामि सा मे विज्जा पसिज्झउ स्वाहा । बन्दिमोक्षणी ॥ १ ॥

*　　*　　*

१० ॐ ह्रीँ नमो नवपुव्वीणं
११ ॐ ह्रीँ नमो दसपुव्वीणं
१२ ॐ ह्रीँ नमो इक्कारसंगसुत्तधारीणं
१३ ॐ ह्रीँ नमो चउदसपुव्वीणं
१४ ॐ ह्रीँ नमो उज्जुमईणं
१५ ॐ ह्रीँ नमो विउलमईणं
१६ ॐ ह्रीँ नमो पयाणुसारीणं

इय एएसिं नमुक्कारं किच्चा जमिअं विज्जं सारसईअं पउंजामि सा मे विज्जा सारसई पसिज्झउ स्वाहा ॥ २ ॥

+　　+　　+





१७ ॐ ह्रीँ नमो कुट्ठबुद्धीणं
१८ ॐ ह्रीँ नमो वीअबुद्धीणं
१९ ॐ ह्रीँ नमो संभिन्नसोआणं
२० ॐ ह्रीँ नमो अक्खीणमहाणसीलद्धिपत्ताणं
२१ ॐ ह्रीँ नमो सव्वलद्धीणं
२२ ॐ ह्रीँ नमो इड्ढिपत्ताणं

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं साधकश्रीसंपादिनीं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ३ ॥

× × ×

२३ ॐ ह्रीँ नमो आगासग(गा)मीणं
२४ ॐ ह्रीँ नमो जंघाचारणाणं
२५ ॐ ह्रीँ नमो विज्जाहराणं स्वाहा

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं दोषनिवारणिं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ४ ॥

\+ + +

२६ ॐ ह्रीँ नमो आमोसहिपत्ताणं
२७ ॐ ह्रीँ नमो खेलोसहिपत्ताणं
२८ ॐ ह्रीँ नमो जल्लोसहिपत्ताणं
२९ ॐ ह्रीँ नमो विप्पोसहिपत्ताणं

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं रोगापहारिणिं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ५ ॥

\+ + +

३० ॐ ह्रीँ नमो उग्गतवाणं
३१ ॐ ह्रीँ नमो दित्ततवाणं



३२ ॐ ह्रीं नमो तत्ततवाणं

३३ ॐ ह्रीं नमो पडिमापडिवज्जिआणं

३४ ॐ ह्रीं नमो महातवाणं

३५ ॐ ह्रीं नमो घोरतवाणं

३६ ॐ ह्रीं नमो घोरगुणपरक्कमाणं

३७ ॐ ह्रीं नमो घोरगुणबंभचारीणं

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं आत्मरक्षाकरीं वज्रपंजरीं परविद्याच्छेदिनीं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ६ ॥

३८ ॐ ह्रीं नमो खीरासवलद्धीणं

३९ ॐ ह्रीं नमो महुआसवलद्धीणं

४० ॐ ह्रीं नमो अमयासवलद्धीणं

४१ ॐ ह्रीं नमो सप्पिरासवलद्धीणं

४२ ॐ ह्रीं नमो सव्वासवलद्धीणं

इय एएसिं नमुक्कारं किच्चा जमियं विज्जं विषापहारिणीं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ७ ॥

४३ ॐ ह्रीं नमो मणपज्जवनाणीणं

४४ ॐ ह्रीं नमो सीअलेसाणं

४५ ॐ ह्रीं नमो तेजोलेसाणं

४६ ॐ ह्रीं नमो तत्तलेसाए(णं)

४७ ॐ ह्रीं नमो आसीविसभावणाणं

४८ ॐ ह्रीं नमो दिट्ठीविसभावणाणं

४९ ॐ ह्रीं नमो महासमणभावणाणं

५० ॐ ह्रीं नमो चारणस(सु)मिणभावणाणं

५१ ॐ ह्रीं नमो तेअग्गिनिसग्गाणं



[इय?]एएसिं नमुक्कारं किच्चा जमियं विज्जं असिवोपसमनीं पउं[जामि सा मे विज्जा पसिज्झउ स्वाहा ॥] ८ ॥

* * *

ॐ ह्रीँ नमो भगवओ वाहुवलिस्स पण्हसमणस्स महापण्हसमणस्स ॐ ह्रीँ वग्गु वग्गु ॐ ह्रीँ सुवग्गु सुवग्गु ॐ ह्रीँ निवग्गु निवग्गु ॐ ह्रीँ महावग्गु महावग्गु ॐ ह्रीँ परमवग्गु परमवग्गु ॐ ह्रीँ चाउरीए (वागुरीए) ॐ ह्रीँ भागुरीए ॐ ह्रीँ सुमिणे ॐ ह्रीँ महासुमिणे ॐ ह्रीँ महुमहुरे स्वाहा ॥ २

ॐ ह्रीँ इरिआए ॐ ह्रीँ किरिआए ॐ ह्रीँ मिरी(रि)आए ॐ ह्रीँ परिआए ॐ ह्रीँ फिरिआए ॐ ह्रीँ सिरिआए ॐ ह्रीँ हरिआए ॐ ह्रीँ आयरिआए स्वाहा ॥ ३

ॐ ह्रीँ इरिइरिकालि ॐ ह्रीँ किलिकिलि(किरिकिरि)कालि ॐ ह्रीँ गिरिगिरिकालि ॐ ह्रीँ पिरिपिरिकालि ॐ ह्रीँ फिरिफिरिकालि ॐ ह्रीँ सिरिसिरिकालि ॐ ह्रीँ हिरिहिरिकालि ॐ ह्रीँ कालि महाकालि स्वाहा ॥ ४

ॐ ह्रीँ इरिइरिमेरु ॐ ह्रीँ किरिकिरिमेरु ॐ ह्रीँ गिरिगिरिमेरु ॐ ह्रीँ पिरिपिरिमेरु ॐ ह्रीँ फिरिफिरिमेरु ॐ ह्रीँ सिरिसिरिमेरु ॐ ह्रीँ आयरिअ(य)मेरु स्वाहा ॥ ह्स्फ्रोँ ह्स्ह्रीँ ह्स्ह्रौँ ह्स्ह्रौँ हूँ फ्रूँ ॐ ह्रीँ अर्हँ चतुःपीठस्वामिने श्री गौतमाय नमः ।[1]

उपाध्यायमन्त्रः—ॐ नमो भगवओ वाहुवलिस्स पन्हसमणस्स महापन्हसमणस्स ॐ वग्गु वग्गु सुवग्गु सुवग्गु निवग्गु निवग्गु परमवग्गु परमवग्गु स्वाहा ॥

ॐ वागुभी २(?) भागुरीए स्वाहा । मोहरिए महामोहरिए सुमण सोमणसिए स्वाहा ॥ वाहुवलिविद्या ।

---

1 एतेन सूरिमन्त्रेण सहितायां प्रतौ पत्रस्य पार्श्वभागे [Marjin मध्ये] लिखितोऽत्राप्रस्तुतोऽपि उपाध्यायमन्त्रः तदनन्तरं लिखिता वाहुवलिविद्या चात्र दीयते—



# मुनिसुन्दरसूरिप्रणीतं

## श्री सूरिमन्त्रस्तोत्रम्

[१]

जयश्रियं श्रीजिनशासनस्य कलिद्विपोत्थापितविघ्नहर्ता ।
परां य एवातनुतेऽधुनापि श्री सूरिमन्त्रं प्रयतः स्तुवे तम् ॥१॥

त्वं तीर्थकृत् त्वं परमं च तीर्थं त्वं गौतमस्त्वं गणभृत् सुधर्मा ।
त्वं विश्वनेता त्वमसीहितानां निधिः सुखानामिह मन्त्रराज ! ॥२॥

किं कामधेनुः सुरपादपो वा किं कामकुम्भः सुमनोमणिर्वा ।
यदि प्रसन्नः सकलेष्टदायी श्रीसूरिमन्त्रोऽसि जगत्पतिस्त्वम् ॥३॥

त्वयि स्थिते चेतसि के नु विघ्नाः के दुर्जनाः के प्रतिपक्षभूपाः ।
के वैरिणः के दुरुपद्रवाश्च स्वामिन् ! समग्रं हि सुखाकृदेव ॥४॥

न लब्धयः काश्चन ते प्रभावात् त्वयि प्रभौ भक्तिभृतां दुरापाः ।
सदा सुखानन्दितचेतसो यत् खेलन्ति ते श्रीमहिमप्रभाभिः ॥५॥

प्रवर्तते तीर्थमिदं जिनस्य जयद् यदादुःप्रसहं कु[दृ]ष्टीः ।
यदागमो यद्विजयी च धर्मस्तदत्र हेतुर्भगवँस्त्वमेव ॥६॥

श्री वर्धमानस्य निदेशतस्त्वं प्रतिष्ठितो गौतमगच्छनेत्रा ।
सिद्धीः समग्राः शिवसम्पदश्च सर्वोग्रपुण्यौघफलानि दत्से ॥७॥

इति महामुनिसुन्दरसंस्तवास्पद गणेश्वर मन्त्रपते मया ।
महिमवारिनिधे स्तुत भक्तितो वितर मेऽर्थितसर्वसुखश्रियः ॥८॥

इति श्रीसूरिमन्त्रस्तोत्रम् १। श्रीमुनिसुन्दरसूरिकरी (?) ।

---

१ आ दुःप्रसहं दुःप्रसहसूरिं यावदित्यर्थः ।



[२]

जयश्रियं शासनमार्हतं श्रीसूरीश्वरा यस्य महामहिम्ना ।
नयन्ति बाह्यान्तरवैरिनाशादाचार्यमन्त्रं तमहं स्तवीमि ॥१॥

न किं सुखं तस्य वशे न का वा, सिद्धिर्न बुद्धिर्नहि वा समृद्धिः ।
श्रीमन्त्रनेतर्भगवन् ! निवासं करोषि नित्यं हृदये यदीये ॥२॥

गणाधिपो वा जिननायको वाऽथवाऽसि धर्मोऽस्य महामहिम्ना ।
स्तुतिस्तवैतैरुचितोपमानैर्नचातिहीनैस्त्रिदशद्रुमाद्यैः ॥३॥

ध्येयस्त्वमेवाऽसि परो जगत्सु प्रभुश्च दानेऽर्थितशर्मलक्ष्म्याः ।
इमं पुनः कारणकार्ययोगं विदन्तु के नाम विनोग्रभाग्यैः ॥४॥

किमामयस्तस्य खलो रिपुर्वा दुःखं भयं पापमथाऽपि विघ्नः ।
त्रातासि मन्त्राधिप यस्य वज्रं भिनत्ति शस्त्राण्यखिलान्यहि(पि) द्राग् ॥५॥

तीर्थस्य धर्मस्य तथार्हतस्य हेतुस्त्वमेकोऽसि कलौ प्रवृत्तेः ।
कलेर्हि नान्योऽभिभवे प्रभुत्वं धत्ते दवाग्नेरिव वारिवाहात् ॥६॥

भवैरनन्तैरपि दुर्लभस्त्वं शुभं च सर्वं सुलभं त्वदाप्तौ ।
तवैव मन्त्राधिपते तदेष कुर्यां समाराधनमेव यत्नात् ॥७॥

इति महामुनिसुन्दरसंस्तवास्पद गणेश्वर मन्त्रपते मया ।
महिमवारिनिधे स्तुत भक्तितो वितर मेऽर्थितसर्वसुखश्रियः ॥८॥

इति श्रीसूरिमन्त्रस्तोत्रम् २ ।



[ ३ ]

जयसिरिविलासभवणं वीरजिणिंदस्स पढमसीसवइं ।
सयलगुणलद्धिजलहिं सिरिगोअमगणहरं वंदे ।। १ ।।
ॐ सह नमो भगवओ जगगुरुणो गोअमस्स सिद्धस्स ।
बुद्धस्स पारगस्स य अक्खीणमहाणसस्स सया ।। २ ।।
अवतर अवतर भगवन् मम हृदये भास्करीं श्रियं बिभ्रत् ।
श्रीँ ह्रीँ श्रीँ ज्ञानाद्यां वितरतु तुभ्यं नमः स्वाहा ।। ३ ।।
वसइ तुहनाममंतो जस्स मणे सयलवंछिअं दितो ।
चिंतामणि––सुरपायव–कामघडाइहिं किं तस्स ।। ४ ।।
सिरिगोअम गणनायग तिहुअणजणसरण दुरिअदुहहरण ।
भवतारण रिउवारण होसु अणाहस्स मह नाहो ।।५ ।।
मेरुसिरे सिहासणकणयमहासहसपत्तकमलठिअं ।
सु (सू) रिगणझाणविसयं ससिप्पहं गोयमं वंदे ।। ६ ।।
सव्वसुहलद्धिदाया समरिअमित्तो वि गोअमो भयवं ।
पयडिअगणहरमंतो दिज्ज मम वंछिअं सयलं ।। ७ ।।
इय सिरिगोअम संथुअ मुणिसुंदर थुइपयं मए वि तुमं ।
देहि मह बोहिसुद्धि (द्धिं) सिवफलयं भुवणकप्पतरू ।। ८ ।।

इति श्रीगौतमगणधरस्तोत्रं गौतमविद्यागर्भितं सप्रभावम्

* * *

[ ४ ]

आराद्धा श्रद्धया सम्यग्ज्ञानादिजयश्रियम्
ददती जगतां मातर्जय भारति देवते ।। १ ।।
चतुर्वरदवीणाक्षसूत्रपुस्तकभृद्भुजे ।
मरालवाहने शक्रक्रियमाणाश्रमस्तवे ।। २ ।।





आद्ये श्री सूरिमन्त्रस्य विद्यापीठे पदे स्थिते ।
श्रीमद्गौतमपादाब्जपरिचर्यामरालिके ॥ ३ ॥
श्रीजिनेन्द्रमुखाम्भोजविलासवसते सदा ।
जिनागमसुधाम्भोधिमध(ध्य) सिनिविधुद्युते ॥ ४ ॥
कविहृत्कमलाक्रीडप्रबोधतरणिप्रभे ।
प्रसीद भगवत्याशु देहि भारति मेऽर्थितम् ॥ ५ ॥ चतुर्भिः कलापकम्
ऐं नमः प्रमुखैर्मन्त्रैराराध्ये विश्वदेवते ।
मरुन्मणिलताजैत्रप्रभावसुभगा(गे) जय ॥ ६ ॥
आराध(ध्या)दर्शनैः सर्वैः सकलाभीष्टदायिनी ।
रातु बोधिं विशुद्धां मे वाग्देवी जिनभक्तिभृत् ॥ ७ ॥
स्तूयमाने महानेकमुनिसुन्दरसंस्तवैः ।
स्तुते मयापि मे देहि प्रार्थिम(तं) श्रीसरस्वति ॥ ८ ॥

इति श्रीभारतीस्तोत्रम् ।

सूरिमन्त्रप्रथमपीठाधिष्ठायकस्तुतिः ।

* * *

[५]

जय श्रीगणभृन्मन्त्रविद्यास्थानप्रतिष्ठिते ।
देवि त्रिभुवनस्वामिन्यनन्तमहिमद्युते ॥ १ ॥
जिनराजपदाम्भोजविलासवरलानिभे[१] ।
गौतमस्वामिपद्भक्ते सक्ते भक्तालिपालने ॥ २ ॥
महापराक्रमो...सि सहस्रभुजराजिते ।
मानुषोत्तरशैलेन्द्रनिवासिनि जयोत्तमे ॥ ३ ॥
महादेवि सुरीवृन्दवन्द्यमानक्रमाम्बुजे ।
सुरासुरनराधीशप्रशस्यगुणवैभवे ॥ ४ ॥

१ वरला हंसी



शाकिनी–डाकिनी–भूत–प्रेतादिग्रहनाशिनि ।
सर्वद्वेषिगणोच्चाटन्यमेयबलशालिनि ॥ ५ ॥

नृतिर्यक्–देवताद्युत्थक्षुद्रोपद्रववारिणि ।
संस्मृतेरपि सर्वेष्टसुखकल्याणकारिणि ॥ ६ ॥

सर्वसूरिगुणस्तुत्ये द्विध(धा)वैरिजयश्रियम् ।
देहि मे शुद्धबोधिं च समाधानं च सर्वतः ॥ ७ ॥

स्तूयमाने महानेकसुनिसुन्दरसंस्तवैः ।
स्तुते मयापि मेऽभीष्टं देहि त्रिभुवनेश्वरि ॥ ८ ॥

इति श्री सूरिमन्त्रस्य विद्याभिधानद्वितीयपीठाधिष्ठात्र्याः
श्री महादेव्याः स्तुतिः

*   *   *

[ ६ ]

सुरराजैः चतुःषष्ठ्या, स्तूयमानगुणप्रभे ।
जय श्रीदेवि विश्वैकमातराश्रितवत्सले ॥ १ ॥

हिमवच्छिखरे पद्महृदपद्मनिवासिनि ।
गौतमक्रमसेवैकरसिके विश्वमोहिनि ॥ २ ॥

सूरिमन्त्रतृतीयोपविद्यापदनिवेशिते ।
सूरिराजहृदम्भोजविलासिनि चतुर्भुजे ॥ ३ ॥

श्रीचन्द्रप्रभभक्त्याऽतिपूते पद्माननेक्षणे ।
पद्महस्ते महारत्ननिधिराजिविराजिते ॥ ४ ॥

गजयानेऽप्सरःश्रेणिगीतनाट्यादिरञ्जिते ।
सदाशिरोधृतछत्रचलच्चामरभासिते ॥ ५ ॥



श्रीजैनशासनानन्तमहिमाम्बुधिचन्द्रिके ।
नानामन्त्रैः समाराध्ये सुरासुरनरर्षिभिः ॥ ६ ॥

विजया–जया–जयन्ती––नन्दा––भद्राद्युपासिते ।
स्मृतिस्तवनपूजाभिः सर्वविघ्नभयापहे ॥ ७ ॥

विश्वकल्पलते लक्ष्मि सर्वालङ्कृत्यलङ्कृते ।
शुद्धबोधिसमाधानसर्वसिद्धीः प्रयच्छ मे ॥ ८ ॥ सप्तभिः कुलकम् ।

स्तूयमाने महानेकमुनिसुन्दरसंस्तवैः ।
स्तुते मयापि सर्वेष्टसिद्धिं श्रीदेवि देहि मे ॥ ९ ॥

इति श्रीसूरिमन्त्रतृतीयपीठाधिष्ठात्र्याः श्रीलक्ष्मीमहादेव्याः स्तुतिः

* * *

[ ७ ]

श्रीमन्त्रपीठनाम्नि प्रतिष्ठितं सूरिमन्त्रतुर्यपदे ।
गणिपिटकयक्षराजं सर्वारिजयश्रिये नौमि ॥ १ ॥

अनपञ्चप्रज्ञप्तिश्रीमद्यक्षाधिपोऽतिजिनभक्तः ।
श्रीगौतमपदसेवानिरतस्तद्भक्तविघ्नहरः ॥ २ ॥

शरचापखड्गखेटकमुख्यास्त्रैः विश्वरक्षणप्रभुभिः ।
वरदाभयैश्च हस्तैर्विंशत्या भ्राजमानाङ्गः ॥ ३ ॥

षोडशयक्षसहस्रप्रभुर्जगज्जैत्रविक्रमो रिपुहा ।
सर्वाश्रितेष्टदानं (ने) प्रगल्भमहिमाम्बुधिर्जयतात् ॥ ४ ॥ त्रिभिर्विशेषकम्

जिनशासनविद्वेषिव्रातकृताशेषविघ्नतिमिररविः ।
सुविहितगुरुगुणसंघाऽनवरतरक्षाभियुक्ततमः ॥ ५ ॥

गणधरमन्त्राराधकसूरिवरप्रार्थितार्थकल्पद्रुः ।
सर्वक्षुद्रोपद्रवहरणोद्युक्तः सकलसंघे ॥ ६ ॥



स्मृतिपूजास्तवनाद्यैः संनिहितोऽस्यवहितश्च यक्षेश !
श्रीगणिपिटक! सुरोत्तम ! विघ्नहृतेर्देहि मे तुष्टिं ॥ ७ ॥
स्तूयमान महानेकमुनिसुन्दरसंस्तवैः ।
इति मे स्तुवतो भूया यक्षेश सकलेष्टकृत् ॥ ८ ॥

इति श्री सूरिमन्त्रचतुर्थपीठाधिष्ठायवद(यक)श्रीगणिपिटकयक्षाधिराजस्तुतिः ।

* * *

[ ८ ]

पञ्चमे गणभृद्विद्यापीठे श्रीमन्त्रनायके ।
प्रतिष्ठितान् सुरेन्द्रा[ दी ]न् स्तुवे द्वेषिजयश्रिये ॥ १ ॥
सौधर्मेन्द्रादयः कल्पाधिपा मे दश वाञ्छितम् ।
ददतां चमरेन्द्राद्या भवनेशाश्चा विंशतिः ॥ २ ॥
दद्युः कालमहाकालप्रमुखा व्यन्तरेश्वराः ।
श्रेयःसंनिहिताद्याश्च मम षोडश षोडश ॥ ३ ॥
ज्योतिश्चक्राधिपाश्चंद्रसूर्याः सर्वग्रहान्विताः ।
रोहिण्याद्यास्तथा विद्यादेव्यः षोडश पान्तु माम् ॥ ४ ॥
गोमुखप्रमुखा यक्षाः पान्तु शासनरक्षकाः ।
चक्रेश्वर्यादिदेव्यश्च मां चतुर्विंशतिः सदा ॥ ५ ॥
सुराः संनिहिताः सर्वे सुर्यश्चेद्धप्रभावभाः ।
रेवतीरोहिणीनागार्जुनार्यखपुटादयः ॥ ६ ॥
यशोभद्रादयश्चापि सूरयो महिमार्णवाः ।
सिद्धश्रीसूरिमंत्रा मे रान्तु विघ्नहृतोऽर्थितं ॥ ७ ॥
इति स्तुतगुणाः श्रीमन्मन्त्रराजप्रतिष्ठिताः ।
देवता ददतामिष्टं मुनिसुन्दरसूरये ॥ ८ ॥

इति श्री गणधरमंत्रपंचमपीठ श्रीमन्त्रराजाधिष्ठायकस्तुतिः ।

एवं पञ्चानामपि पीठ(ठानां) स्तुतिः ।

* * *



[ ९ ]

जय श्रीसद्युगादीशपदपद्ममधुव्रते ।
सुरेन्द्रादिसुरश्रेणिश्लाध्यसद्गुणविक्रमे ॥ १ ॥
जय श्रीदेवदेवेन्द्रप्रशस्यगुणविक्रमे ।
श्रीयुगादिजगन्नाथक्रमाम्भोजमधुव्रति(ते) ॥ २ ॥
चक्रवित्रासिताशेषरिपुचक्रपराक्रमे ।
चक्रेश्वरि सूरिवृन्दवन्द्यमानक्रमाम्बुजे ॥ ३ ॥
तीर्थप्रवृत्तिहेतुश्रीसूरिमन्त्रस्य पञ्चमे ।
मन्त्रराजाभिधे स्थाने सुप्रतिष्ठे महाबले ॥ ४ ॥
वरदेष्वरिपाशांकितापसव्यचतुर्भुजे ।
सत्त्वाह्लादिनी[ नि ]चक्रांकुशसव्यचतुःशये ॥ ५ ॥
सुपर्णवाहने श्रीमद्गौतमोपास्तिलालसे ।
स्वर्णवर्णे सदोद्भासिसारालङ्काररराजिते ॥ ६ ॥
सूरिभिः सततं ध्येये तेषामिष्टप्रसाधिके ।
सर्वविघ्नावलीघातनिघ्ने रक्षापरे सदा ॥ ७ ॥
चतुर्विधस्य संघस्य सर्वोपद्रवनाशिनि ।
समाधानं सुबोधिं च सदा देहीष्टदे मम ॥ ८ ॥

स्तूयमान महानेकमुनिसुन्दरसंस्तवैः ।
स्तुते मयाप्यभीष्टार्थं चक्रेश्वरि विधेहि मे ॥ ९ ॥

इति श्री युगादिजिनशासनदेव्याः श्रीमन्त्रपंचमपीठाधिष्ठात्र्याः श्रीचक्रेश्वरीदेव्याः स्तुतिः ।

* * *

[ १० ]

पवयणपडिवक्खाणं, सरिऊण य जयसिरीइ दिप्पंते ।
बलमाहिड्ढे गणिवरविज्जाहिट्ठायगे थुणिमो ॥ १ ॥
विज्जाए पढमपए पइट्ठिआ भारई भुवणपुज्जा ।
गोअमभत्ता मुणिगणझाणपयं मे सुहं देउ ॥ २ ॥



विज्जाइ दुइअठाणे सुपइट्ठा महबला स [ह] स्सभुआ ।
तिहुअणसामिणी देवी मम रिउविग्घं (वग्गं) हरउ सिग्घं ॥ ३ ॥

उवविज्जातइयपए पत्तपइट्ठा सुहं दिसउ लच्छी ।
विजया–जया–जयंती–नंदाभद्दाजुआ मज्झ ॥ ४ ॥

मंतपयंमि चउत्थे पइट्ठिओ जक्खरायगणिपडिमो (पिडगो) ।
सोलससहस्सजक्खाहिवो दिसउ मे समाहिवरं ॥ ५ ॥

अह सुपइट्ठा पंचमविज्जाठाणंमि मंतरायंमि ।
सोहम्मीसाणसणंकुमारमाहिंदबंभेसा ॥ ६ ॥

लंतगसुक्कसहस्साराणयपाणयहिवारणच्चुअगा ।
इय कप्पिंदा दस मम गोअमगु (भ) त्ता सुहं दिंतु ॥ ७ ॥

चमरे १ बली य २ धरणे ३ भूआणंदे य ४ वेणुदेवे अ ५ ।
तत्तो अ वेणुदाली ६ हरिकंत ७ हरिस्सहे चेव ८ ॥ ८ ॥

अग्गिसिह ९ अग्गिमाणव १० पुन्न ११ विसिट्ठे १२ तहेव जलकंते १३ ।
जलपह १४ तह अमिअगई १५ मिअवाहण १६ दाहिणुत्तरओ ॥ ९ ॥

बेलंबे १७ अ पह [ भं ] जण १८ घोस १९ महघोस २० वीस भुवणिंदा ।
दुविहपडिवक्खहरणा दिंतु सया मह समाहाणं ॥ १० ॥

काले १ य महाकाले २ सुरूव ३ पडिरूव ४ पुन्नभद्दे ५ अ ।
तह चेव माणिभद्दे ६ भीमे ७ अ तहा महाभीमे ८ ॥ ११ ॥

किंनर ९ किंपुरिसे १० सप्पुरिस ११ तह य अइकाए १२ ।
महाकाए १३ गीअरुई १४ गीअजसे १५ मज्झ दिंतु सुहं ॥ १२ ॥

सन्निहीए १ सामिणीए २ धाइ ३ विहाए ४ असीइ ५ असिवाले ६ ।
इसर ७ महेसरे ८ वि अ हवइ सुवच्छे ९ विसाले य १० ॥ १३ ॥



हासे ११ हासरुइ विय १२ सेए य १३ भवे तहा महासेए १४
पयगे १५ पयगवइ १६ वि अ वंतरवइ दितु मम तुट्ठिं ॥ १४॥

रकखंतु मम रोहिणि १ पन्नत्ती २ वज्जसंखला य ३ सया।
वज्जंकुसी ४ चक्केसरि ५ नरदत्ता ६ कालि ७ महाकाली ८ ॥ १५ ॥

गोरी ९ तह गंधारी १० महजाला ११ माणवी य १२ वइरुट्टा १३
अच्छुत्ता १४ माणसिया १५ महामाणसिआ य १६ देवीओ ॥ १६ ॥

जकखा गोमुख १ महजक्ख २ तिमुहह ३ जक्खेस ४ तुंबरु ५ कुसुमो ६
मायंग ७ विजय ८ अजिआ ९ बंभो १० मणुएसर ११ कुमारो १२॥१७॥

छम्मुह १३ पयाल १४ किंनर १५ गरूडो १६ गंधव्व १७ तह य जक्खिदो १८
कूबर १० वरुणो २० भिउडी २१ गोमेहो २२ पास २३ मायंगा २४ ॥ १८॥

देवीओ चक्केसरि १ अजिआ २ दुरिआरि ३ कालि ४ महाकाली ५
अच्चुअ ६ संता ७ जाला ८ सुतारय ९ असोअ १० सिरिवच्छा ११ ॥ १९॥

चंडा १२ विजयं १३ कुसी १४ पन्नइइत्ति १५ निव्वाणि १६ अच्चुआ १७ धरणी १८।
वइरुट्ट १९ दत्त २० गंधारि २१ अंब २२ पउमावई २३ सिद्धा २४ ॥२०॥

इय चउसट्ठि सुरिंदा सोलस विज्जासुरी तहा जक्खा।
चउवीस जक्खिणी विय सासणहिट्ठायगा सबला ॥ २१ ॥

सिरिमंतरायसुट्ठिय [1]जिणसा......................................

* * *

---

१ एतदनन्तरं 'मुनि जीतविमलजी अधूरु' इति प्रतौ लिखितमस्ति।



श्रीमुनिसुन्दरसूरिरचितं श्रीसूरिमन्त्रमहिमागर्भितं

# श्रीगौतमस्तोत्रम्

जयश्रियां सेवधिमेधमानसमग्रलब्धिह्रदिनीनदीशम् ।
सुरासुरेन्द्रालिविधीयमानक्रमाम्बुजोपासनभासमानम् ॥ १ ॥

सहस्रपत्राद्भुतहेमपद्मे पद्मासनासीनमदीनमेधम् ।
जगत्त्रयैकप्रभुताप्रभावप्रभाभिरामं मुनिराजिराजम् ॥ २ ॥

अनुत्तरब्रह्ममयं निरङ्कमृगाङ्कबिम्बोज्ज्वलकायकान्तिम् ।
श्रीवर्धमानादिमशिष्यनाथं श्रीगौतमस्वामिनमानुवामि॥ ३ ॥ (विशेषकम्)

निदेशतो वीरजिनेश्वरस्य रदप्रम (३२) श्लोकमितं व्यधाद्यः ।
श्रीसूरिमन्त्रं त्रिजगद्धितैषी स गौतमो रातु ममेष्टसिद्धिम् ॥ ४ ॥

सरस्वती विश्वहितावधाना सूरीश्वरध्यानपदप्रभावा [त्] ।
सहस्रहस्तप्रथिता त्रिलोकस्वामीन्यपि प्रार्थितशस्तदात्री ॥ ५ ॥

श्रीदेवता विश्वविमोहनी चासुरेन्द्रवर्गस्तवनीयरूपा ।
यक्षाधिपो विंशतिशस्तहस्तस्फुरज्जगज्जैत्रपराक्रमश्च ॥ ६ ॥

इन्द्राश्चतुःषष्टिरभीष्टदाश्च त्रिलोकरक्षाप्रभवत्प्रभावाः ।
यक्षाश्चतुर्विंशतिरार्हतांह्रिसेवापवित्रीक्रियमाणगात्राः ॥ ७ ॥

देव्योऽपि दिव्याव्ययशक्तियुक्ता भक्ता जिनेष्वार्हतभद्रसक्ताः ।
उपासते यं गणधारिमन्त्राधिष्ठायिका नित्यमचिन्त्यभक्त्या ॥ ८ ॥

यन्नाममन्त्रोऽपि जयत्यचिन्त्यशक्तिर्मरुत्कुम्भ–मणि–द्रुमादीन् ।
तं सर्वचिन्तातिगशर्म्महेतुं श्रीगौतमं नौमि भवाब्धिसेतुम् ॥ ९ ॥

पदं यथाब्धिस्तटिनीतटीनां खं तारकाणां विटपी लतानाम् ।
तथा विभो ! गौतम ! सर्वलब्धिप्रभामहिम्नां भगवँस्त्वमेव ॥ १० ॥





मुक्तिं व्रजँस्त्वं न्यदधाः स्वनाम्नि सश्रीसखीर्नाथ ! निजानुलब्धीः ।
वसत्यदो यत्र नरे गणेन्द्र ! वसन्ति यत्ता अपि तत्र सर्वाः ॥ ११ ॥

कान्ताः शिवाप्तौ तव लब्धयस्त्वां दुःखाद् भ्रमन्त्यः किल वीक्ष्यमाणाः ।
नामापि शृण्वन्ति तवेश ! यत्र सूत्कण्ठयेवानुसरन्ति तं द्राक् ॥ १२ ॥

तवाऽऽतपस्यासमयात् कराब्जे जज्ञे निलीना खलु केवलश्रीः ।
दीक्षामिषाद् यन्न्यदधा यदीयशिरस्सु तं ते द्रुतमापुरेताम् ॥ १३ ॥

त्वयाऽऽत्मनो वीरजिनाधिपेनाऽभेदस्तथाऽध्यायि वशेन भक्तेः ।
अनन्तचिद्–दर्शन–वीर्य-सौख्यलाभात् तदात्मैव विभो ! यथाऽभूः ॥१४॥

शिवश्रियः कोऽपि दृढोऽनुरागस्त्वयीश ! सौभाग्यरमात्मकेऽहो ? ।
नामाऽपि यस्ते जपतः प्रबुद्धानेषाऽखिलान् प्रापयते (ती) श ! शर्म ॥ १५ ॥

त्वदीयभक्तेः शिवशर्मलक्ष्म्या मैत्री प्रभो ! काऽपि परा नवीना ।
स्वाधारकान् भव्यजनान् गुणाढ्याँस्तस्यै पतीन् सा हि ददात्यशेषान् ॥१६॥

न के पदार्था बहवो महान्तस्तव प्रभावे तु विचिन्त्यमाने ।
पृथ्वी न पृथ्वी न गिरिर्गरीयान् नाब्धिर्महीयान्न नमोऽप्यदभ्रम् ॥ १७ ॥

विदन्ति मानं जलधेर्भुवो वा केचित् कथञ्चिन्नभसोऽपि विज्ञाः ।
न ते प्रभावे पुनरस्ति मानं भवन्त्यमाना अपि किं तदा (द) र्थाः ॥ १८ ॥

ब्रह्मास्पदं वा कमलापदं वा वदन्तु पद्मं तव पादयोस्तु ।
अनाप्य माहात्म्यरमां नु तस्यै निषेवतेऽम्बूनि सदा तपस्वी (स्वि) ॥१९॥

भोः ! भोः ! श्रिये किं व्यवहारखेदैराराधितैः किं बहुमन्त्र–तन्त्रैः ।
किं दैनतोपासनकर्मभिश्च श्रीगौतमं ध्यायत नाथमेकम् ॥ २० ॥

पुरा यथा गौतम ! तापसादिकान् मिथ्यामतादुद्धरसि स्फुरत्कृपः ।
तपस्क्रिया-संयम–योगदुर्बलं भवावटान्मामपि तद्वदुद्धर ॥ २१ ॥



भवाद् बिभेम्युत्कटदुःखराशेर्धर्तुं द्विधेशे न च योगशुद्धिम् ।
गतिर्न मेऽन्याऽस्ति ततः शिवेच्छोस्त्वमेव तद्धेहि कृपां मयीश ! ॥२२॥

भावद्विषो ये निहतास्त्वयेश ! ते व्यन्तरीभूय भवद्रुषेव ।
निरोजसं त्वत्कुलजं समीक्ष्य मां पीडयन्तीति मुनीन्द्र ! रक्ष ॥ २३ ॥

गणिवर ! तव सद्गुणैकलीनं भवतु मनो मम गौतमाविरामम् ।
विजहतु तदिमे कषायमुख्या रिपुनिकराश्च मयीति सुप्रसीद ॥ २४ ॥

एवं श्रीगणनाथ ! गौतमगुरो ! स्तुत्वा मयाऽभ्यर्थ्यसे
नाम्नाऽहं मुनिसुन्दरोऽभवमथो कुर्याः प्रसादं तथा ।
स्यां सर्वज्ञ ! यथार्थतोऽपि विशदज्ञानादिरत्नत्रया–
ल्लब्ध्वा कर्मजयश्रियं शिवपुरे राज्यं लभे चाचिरात् ॥ २५ ॥

* * *

इति श्रीयुगप्रधानावतार–बृहत्तपागच्छाधिराज–श्रीदेवसुन्दरसूरि–श्रीज्ञानसागरसूरि–श्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनिसुन्दरसूरिभिर्विरचिते जयश्र्यंके श्रीजिन-रत्नकोशे प्रथमप्रस्तावे श्रीगौतमस्तोत्रमेकविंशम् ॥



अज्ञातकर्तृकः

# श्रीसूरिमंत्राधिस्तवः

नमोऽस्तु श्री–ह्री धृति–कीर्ति–बुद्धि–लक्ष्मीविलासैकनिकेतनाय ।
श्रीवीरपट्टाम्बरभास्कराय लोकोत्तमाय प्रभुगौतमाय ॥ १ ॥

ॐकारमक्षीणमहानसानां श्रीमंतमुज्जृंभतपःप्रभावैः ।
ह्लीमंतमात्मानुगवन्दनेनार्हन्तं नमस्यामि तमिन्द्रभूतिम् ॥ २ ॥

उन्निद्रसौवर्णसहस्रपत्रगर्भस्थसिंहासनसन्निषण्णम् ।
दिव्यातपत्रं परिवीज्यमानं सच्चामरैश्चामरराजसेव्यम् ॥ ३ ॥

कल्पद्रुचिन्तामणि–कामधेनुसमाननामानसमानशक्तिम् ।
अनेकलोकोत्तरलब्धिसिद्धं श्रीगौतमं धन्यतमाः स्मरन्ति ॥ ४ ॥

एकैव षड्दर्शनदृक्कनीनिका पुराणवेदागमजन्मभूमिका ।
आनन्दचिद्ब्रह्ममयी सरस्वती सदेन्द्रभूतेश्चरणोपसेविनी ॥ ५ ॥

मानुषोत्तरगिरेः शिरःस्थिता दोःसहस्रसुभगा महाष(प्र)भा ।
गीतगौतमगुणा त्रिविष्टपस्वामिनी शिवशतं ददातु मे ॥ ६ ॥

सदा चतुःषष्टिसुरेन्द्रमानसव्यामोहिनी पद्महृदाधिवासिनी ।
सर्वाङ्गशृङ्गारतरङ्गितद्युतिः श्रीगौतमं श्रीरपि वन्दते त्रिधा ॥ ७ ॥

जया–जयन्ती–विजया–पराजिता–नन्दा–सुभद्राप्रमुखः सुरीजनः ।
प्रतिक्षणोज्जागरभूरिविभ्रमः श्रीगौतमं गायति गाढगौरवः ॥ ८ ॥

यक्षषोडशसहस्रनायको, दिव्यविंशतिभुजो महाबलः ।
द्वादशाङ्गसमयाधिदेवता गौतमस्मृतिजुषां शिवंकरः ॥ ९ ॥

ईशाननाथेन समं शतक्रतुः सनत्कुमाराधिपतिः सुरान्वितः ।
श्रीब्रह्मलोकाधिपतिश्च सेवते, सगौतमं मंत्रवरं पदे पदे ॥ १० ॥



अष्टनागकुलनायको मणिप्रोल्लसत्फणसहस्रभासुरः ।
गौतमाय धरणः (कृ)ताञ्जलिर्मन्त्रराजसहिताय वन्दते ॥ ११ ॥

रोहिणीप्रभृतयः सुरांगना वासवा अपि परे सदाश्रवाः ।
गौतममक्षत(?)यक्षयक्षिणीश्रेणयोऽपि दधते मुनीश्वरम् ॥ १२ ॥

सज्जलान्नधनभोग[1]धृतीनां लब्धिरद्भुततमेह भवे स्यात् ।
गौतमस्मरणतः परलोके भुर्भुवःस्वरपवर्गसुखानि ॥ १३ ॥

आं क्रों ह्रीं श्रीं मंत्रतो ध्यानकाले
पार्श्वे कृत्वा प्रांजलिः सर्वदेवान् ।
कायोत्सर्गैर्धूपकर्पूरवासैः ।
पूजां कुर्यात् सर्वदा ब्रह्मचारी ॥ १४ ॥

जितेन्द्रियः स्वल्पजलाभिषेकवान्, शुद्धाम्बरो गुप्तिसमित्यलङ्कृतः
श्रीइन्द्रभूतेरुपवैणवं गुणान् स्मरन्नरः स्याच्छ्रुतसिन्धुपारगः ॥ १५ ॥

तं श्रयन्ति पुरुषार्थसिद्धयो भूष्यते विशदसाहसेन सः ।
गौतमः प्रणयभुक्तिमुक्तिदो यस्य भाविविभवस्य नाथते ॥ १६ ॥

स्वर्णाष्टाग्रसहस्रपत्रकमले पद्मासनस्थं मुनिं
स्फूर्जल्लब्धिविभूषितं गणधरं श्रीगौतमस्वामिनम् ।
देवेन्द्राद्यमरावलीविरचितोपास्ति समस्ताद्भुत—
श्रीवासातिशयप्रभापरिगतं ध्यायामि योगीश्वरम् ॥ १७ ॥

इति श्री सूरिमंत्राधिस्तवः



[1] घृतानां ?

